THE

PRINCESS OF WALES

SARASWATI BHAWANA TEXTS.

No. 60.

PART 2.

THE

# SANDILYA SAMHITA

BHAKTI KHANDA

PART 2.

**GOVERNMENT SANSKRIT LIBRARY,**

BENARES.

**Saleable at half of the printed price.**

Price, Rs. 2-12-0

THE

PRINCESS OF WALES

SARASWTI BHAWANA TEXTS.

No. 60.

PART 2.

---

EDITED BY

MAHAMAHOPADHYAYA

GOPINATH KAVIRAJ, M. A.

THE

# SANDILYA SAMHITA

## BHAKTI KHANDA

PART 2.

---

PRINTED BY MR. H. P. DUTT

AT THE EUREKA PRINTING WORKS,

BENARES CITY.

---

1936

श्रीः ।

महर्षिश्रीशाण्डिल्यकृता

# शाण्डिल्यसंहिता

## ( भक्तिखण्डः )

---

काशिकराजकीयपाठशालीयपुराणेतिहासाध्यापकेन

व्याकरणाचार्यमीमांसातीर्थफडकेकुलजेनानन्तशास्त्रिणासंशोधिता ।

---

THE

# SANDILYA SAMHITA

## BHAKTI KHANDA

OF

**MAHARSHI SANDILYA**

Edited with Introduction

by

**Ananta Shastri Phadake Vyakaranacharya,**
**Professor, Sanskrit College, Benares.**

श्री १०८ भैरवायनमः ।

# अथ प्रास्ताविकम् ।



अथोपक्रम्यते नारदपाञ्चरात्रसंहितास्वन्यतमा श्रीशाण्डिल्यर्षि-प्रणीता शाण्डिल्यसंहिता प्रकाशयितुम् । जानन्त्येव हि सर्वे विद्वांसो यत्किञ्चिदल्पादल्पमपि पूजादि धार्मिकं कार्यं प्रत्यहमस्माभिर-नुष्ठीयते तत् सम्यक् पाञ्चरात्रशास्त्रज्ञानं विना न सुसम्पादयितुं शक्यत इति । धर्मशास्त्रनिबन्धेष्वनेकत्र स्थलेषु पाञ्चरात्रग्रन्थस्थित-वचनजालं स्वीकृत्य संदिग्धस्थलीयनिर्णयः कृत इति न तिरोहितं तच्छास्त्रविदाम् । तत्र तावत् शाण्डिल्यसंहिताविषयविचारात्पूर्वं पाञ्चरात्रं कुत्र, केन, किमर्थं, कदा प्रकाशितमित्यादिविचार आवश्यकः, विना तेन शाण्डिल्यसंहिताविचारो विसङ्गतः स्यादतः स एव प्रारभ्यते । तत्र पाञ्चरात्रमूलभूतश्रुत्यादिविचारादपि प्राक् पञ्चरात्रशब्दनिर्वचनं ग्रन्थकारैः कथं कृतं ततः किं च लभ्यत इति विचार्यते । ईश्वरसंहितास्थैकविंशत्यध्यायदर्शनेनेदं ज्ञायते पञ्च महर्षिभ्यः शाण्डिल्यप्रभृतिभ्यो वासुदेवेनैकैकरात्रेणोपदिष्टतया पञ्चरात्रपदप्रवृत्तिरिति (१)। पाद्मसंहितालोचने त्वेतच्छास्त्रे-

(१) पञ्चायुधांशास्ते पञ्च शाण्डिल्यश्चौपगायनः ।
सौञ्ज्यायनः कौशिकश्च भारद्वाजश्च योगिनः ॥
......................................
तेषां तु तपसा तुष्टो वासुदेवो जगत्पतिः ।
......................................
पञ्चापि पृथगेकैकदिवारात्रं जगत्प्रभुः ।
अध्यापयामास यतस्तदेतन्मुनिपुङ्गवाः ।
शास्त्रं सर्वजनैर्लोके पञ्चरात्रमितीर्यते ॥ इति ( ईश्व० अ० २१ )

तरसाङ्ख्यादीनि पञ्च शास्त्राणि यतो रात्रिवदाचरन्ति व्यर्थत्वात्तस्मादेतत्पञ्चरात्रमितीति (१)। विष्णुसंहितायां तु शब्दादिविषयात्मिका महाभूतात्मिका वा पञ्च गोचरा रात्रयः परमं तेज आसाद्य नश्यन्त्यत एतत्पञ्चरात्रमित्युक्तम् (२)। नारदपाञ्चरात्रसंज्ञके ज्येष्ठाराममुकुन्दजीमुद्रिते पुस्तके तु रात्रशब्दस्य ज्ञानवाचित्वेन ज्ञानस्य पञ्चविधत्वेन पञ्चरात्रपदप्रवृत्तिर्बोधिता (३)। भारततोऽपि साङ्ख्ययोगवेदारण्यमिलितानां पञ्चरात्रसंज्ञेति ज्ञायते (४)। प्रकृतशाण्डिल्यसंहितायां तु साङ्ख्यादिशास्त्राणामात्मानन्दसमर्पणाद्रात्रिशब्दवाच्यत्वम्, अस्य शास्त्रस्य सम्पूर्णसाङ्ख्यादिशास्त्रीयानन्दसमर्पणात् पञ्चरात्रत्वमिति (५)। केचन शतपथब्राह्मणे(१३-६-१)पञ्चरात्रसञ्ज्ञकमेकं सत्रमस्ति

---

(१) पञ्चेतराणि शास्त्राणि रात्रीयन्ते महान्त्यपि।
तत्सन्निधौ समाख्यासौ तेन लोके प्रवर्तते ॥ इति (पा० ज्ञा० अ० १)

(२) रात्रयो गोचराः पञ्च शब्दादिविषयात्मिकाः।
महाभूतात्मिका वात्र पञ्चरात्रमिदं ततः॥
अवाप्य तु परं तेजो यत्रैताः पञ्चरात्रयः।
नश्यन्ति पञ्चरात्रं तत् सर्वाज्ञानविनाशनम् ॥ इति (वि० सं०)

(३) रात्रं च ज्ञानवचनं ज्ञानं पञ्चविधं स्मृतम्।
तेनेदं पञ्चरात्रं च प्रवदन्ति मनीषिणः ॥ इति। (रा० १, अ० १)

(४) एवमेकं साङ्ख्यायोगं वेदारण्यकमेव च।
परस्पराङ्गान्येतानि पाञ्चरात्रं च कथ्यते ॥ इति (शां० अ० २३९, ८२)

(५) साङ्ख्यं योगस्तथा शैवं वेदारण्ये च पञ्चकम्।
प्रोच्यन्ते रात्रयः कान्ते आत्मानन्दसमर्पणात् ॥
पञ्चानामीप्सितो योऽर्थः स यत्र समवाप्यते।
परमानन्दमेतेन प्राप्नोति परमात्मनः ॥
प्रमाणपञ्चकैः पूर्णं पञ्चकार्थोपदेशनम्।
प्रपञ्चातीतसद्धर्मं पञ्चरात्रमुदाहृतम् ॥ इति (अं० १ अ० ४, ७७)

यस्मिन् विष्णुरिज्यते तत इदं रूढं नाम विष्णुयजनसमानधर्मत्वा-दत्रापि प्रवृत्तमिति वदन्ति । भवतु कथमपि पञ्चरात्रशब्दस्य प्रवृत्तिः । परन्तु सर्वनिर्वचनालोचनेनेदमवश्यं प्रसिद्ध्यति यदिदं सर्वशास्त्रापेक्षयोत्कृष्टं परमश्रेयःसाधकं चेति ।

पञ्चरात्रमिदं शास्त्रं-पितृमातृभूतेन सर्वस्य जगतो गुरुणा त्वया नारायणेन कस्य यजनं क्रियत इतिनारदशङ्काया निर्वतकोत्तरप्रदाना-नन्तरं स्वीयाराध्यदेवताप्रशंसकेन बदर्याश्रमस्थेन तेन श्वेतद्वीपगम-नार्थं प्रेरिताय तत्र च गतवते नारदाय श्वेतदीपस्थेन नारायणेन वेदतुल्यमुपदिष्टमिति शान्तिपर्वस्थनारायणीयाख्यानतो लभ्यते(१)।

---

(१) पिता माता च सर्वस्य जगतः शाश्वतो गुरुः ।
कस्त्वं यजसे देवं पितरं कं न विद्महे ॥ इति (शां० अ०३३४)
गच्छेति तं नारदमुक्तवान्स
संपूजयित्वाऽऽत्मविधिक्रियाभिः ॥ इति ( शां०अ०३३५-६ )
क्षीरोदधेर्योत्तरतो हि द्वीपः ।
श्वेतः स नाम्ना प्राथितो विशालः ॥ इति ( शां० अ०३३५,८ )
प्राप्य श्वेतं महाद्वीपं नारदो भगवानृषिः । इति ( शां० अ०३३८ )
..................................
नारदोऽपि महातेजाः प्राप्यानुग्रहमीप्सितम् ।
नरनारायणौ द्रष्टुं बदर्याश्रममाद्रवत् ॥
इदं महोपनिषदं चतुर्वेदसमन्वितम् ।
साङ्ख्ययोगकृतं तेन पञ्चरात्रानुशब्दितम् ॥
..................................
..........पुराणं वेदसंमितम् ॥ इति ( शां० अ०३३९ )

यस्यैव पञ्चरात्रविधेर्नामान्तरं सात्वतविधिरिति तन्त्रस्य सात्वतमिति च। यतो नारदोपदिष्टपाञ्चरात्रविधिश्रवणात्परपुरुषपरम्परासु(१)श्रुतस्य सूर्यस्य पञ्चरात्रोपदेष्टुरुपदिष्टविधेः सात्वतमितिस्पष्टतयोल्लेखः शान्तिपर्वणि नारायणीयोपाख्यानेऽवलोक्यते (२)। तथा पाञ्चरात्रशास्त्रप्रवर्तकपरम्परायां(३)श्रुतस्य भीष्मस्याचारकथनप्रसङ्गे

---

(१) नारायणमुखोद्गीतं नारदोऽश्रावयत्पुनः।
ब्रह्मणः सदने तात यथादृष्टं यथाश्रुतम्॥
ये त्वन्ये ब्रह्मसदने सिद्धसङ्घाः समागताः।
तेभ्यस्तच्छ्रावयामास पुराणं वेदसंमितम्॥
तेषां सकाशात्सूर्यस्तु श्रुत्वा वै भावितात्मनाम्।
आत्मानुगामिनां राजञ्श्रावयामास वै ततः॥
षट्षष्टिर्हि सहस्राणि ऋषीणां भावितात्मनाम्।
सूर्यस्य तपतो लोकान्निर्मिता ये पुरःसराः।
तेषामकथयत्सूर्यः सर्वेषां भावितात्मनाम्। इति (शां०अ०३३६)

(२) सात्वतं विधिमास्थाय प्राक्सूर्यमुखनिःसृतम्।
पूजयामास देवेशं तच्छेषेण पितामहान्॥ इति (शां०अ०३३५,१९)

(३) सूर्यानुगामिभिस्तात ऋषिभिस्तैर्महात्मभिः॥
मेरौ समागता देवाः श्राविताश्चेदमुत्तमम्।
देवानां तु सकाशाद्वै ततः श्रुत्वाऽसितो द्विजः॥
श्रावयामास राजेन्द्र पितॄणां मुनिसत्तमः।
मम चापि पिता तात कथयामास शान्तनुः॥
ततो मयाऽपि श्रुत्वा च कीर्तितं तव भारत। इति (शां०अ०३३६)

भीष्मपर्वणि स्पष्टतया सात्वतपदस्योल्लेखो विद्यते(१)। एवञ्च सात्वतपाञ्चरात्रशब्दौ न भिन्नार्थाविति सिद्धम्। एवं भागवतपदमपि किञ्चिदंशेन तदर्थबोधकमित्यपि महाभारतसाहाय्येन वक्तुं शक्यते, यत उपरिचरवसुचरित्र आत्मनो धनादिकस्य च भगवते समर्पणनिमित्तकत्वेन भागवतपदं प्रयुक्तम् (२)। तेन सात्वतविधिना—पाञ्चरात्रविधिना भगवते सर्वं समर्पणीयमितिबोधकं शास्त्रं भागवतपदवाच्यमित्यायाति। यद्यपि श्रीमच्छङ्कराचार्यभाष्यग्रन्थेऽन्यसर्वमतनिराकरणप्रकरणे "उत्पत्यसंभवात्" इतिसूत्रीयविचारप्रसङ्गे 'यदपि भागवता मन्यन्ते' इत्याद्युक्त्वा पाञ्चरात्रमतप्रदर्शनेन तथा चागमप्रामाण्ये श्रीमद्यामुनाचार्यैः 'तदिह भागवतं गतमत्सरा मतमिदं विमृशन्तु विपश्चितः' इत्यादिलेखेन च भागवत-पाञ्चरात्र-शब्दावभिन्नार्थाविति लभ्यते तथापि श्रीमच्छङ्कराचार्यादिसमये भागवतशब्दः पाञ्चरात्रबोधकः स्यादिति स्वीकर्तुं शक्यं न तु ततः प्रागिति शङ्कानिवारणार्थमयं प्रयासः।

सात्वत-पाञ्चरात्र-भागवतपदवाच्यमतस्य कालो यः प्रकृतमहाभारतस्य कालः ततः कालात्पूर्वतन इति निर्णयार्थं महाभारतकालनिर्णयसंसाधकसिद्धान्तप्रदर्शनमावश्यकम्। ऐतिहासिकैर्लोकमान्यतिलकादिमहोदयैर्गीताकालनिर्णयप्रसङ्गे महाभारतकालनिर्णयोऽनेकैःप्रमाणैः संपादितः। तथाहि। ३६७ वर्षमितशालिवाहनशाकस्थेनैकेन गुप्तराजीयशिलालेखेन स्पष्टतया तत्समये महाभारतं लक्षश्लोकात्मकमासीदितिनिश्चीयते। किञ्च शालिवाहनशकप्रारम्भकालीनबौद्धाश्वघोषकृतवज्रसूचिकोपनिषद्व्याख्याने हरिवंशस्थितः "सप्तव्याधा दशार्णेषु मृगाः कालाञ्जने गिरौ" (२४--२०--२१)

---

(१) सात्वतं विधिमास्थाय गीतः संकर्षणेन यः। इति (भी०अ०६६४०)

(२) आत्मराज्यं धनं चैव कलत्रं वाहनं तथा।
यतद्भागवतं सर्वमिति तत्प्रोक्षितं सदा॥ इति (शां०३३५,२३)

इत्यादिश्लोक उद्धृत:, तथा महाभारतस्थशान्तिपर्वगता अपि श्लोका उद्धृता दृश्यन्ते ( शां० २६१-१७ )। तेनैतज्ज्ञायतेऽश्वघोषसमये—शकप्रारम्भसमये-हरिवंशसहितं भारतं-अर्थात् लक्षश्लोकात्मकं प्रसिद्धमासीदिति।

किञ्चाश्वलायनगृह्यसूत्रे "भारतमहाभारतधर्माचार्या:" इत्याकारकः स्पष्टतयोल्लेखो दृश्यते। तथा बौधायनधर्मसूत्रे ययात्याख्यानस्थितश्लोक उपलभ्यते । एवं बौधायनगृह्यसूत्रशेषे विष्णुसहस्रनामोल्लेखस्तथा तत्रैव "पत्रं पुष्पं फलं तोयम्" अयं श्लोको गीतास्थ उल्लिखितस्तेन स्पष्टतया ज्ञायते ब्राह्मणकालानन्तरं सूत्रकालसमकालो महाभारतकाल इति।

किञ्च महाभारते नक्षत्रगणना वर्तते न राशिगणना तन्नामानि च। राश्यादिनामानि ग्रीकसम्बन्धत आगतानीति विदुषां मतम्, एवं ग्रीकजनसम्बन्धतः पूर्वं महाभारतं स्थितम्, ग्रीकजनसम्बन्धश्च "अलेक्झंडरागमनकाल एव जात इति।

किञ्च महाभारते श्रवणादिनक्षत्रगणनासीदित्यनुगीतातः ( आश्व० ४४, २ ) आदिपर्वतश्च ( आ० ७१, ३४ ) ज्ञायते। तेनेदं सिद्धयति, तस्मिन्नक्षत्र उदगयनं तदासीदिती। वेदाङ्गज्योतिषकाले धनिष्ठानक्षत्र उदगयनमासीत्। तत्कालः शालिवाहनशकाब्दतः पूर्वं १५०० वर्षपरिमितो भवति। श्रवणोदगयनकालश्च शालिवाहनशकतः पूर्वं ५०० वर्षपरिमितो गणितरीत्या सिद्ध्यति। एवं च शालिवाहनशकाब्दप्रारम्भात्प्राग् ५०० वर्षमितो महाभारतस्य कालः पर्यवस्यति। एवञ्च ततः पूर्वं पाञ्चरात्रसम्प्रदायास्तित्वमवश्यं स्वीकार्यमापतति।

केचन नारायणीयोपाख्याने स्थितस्यापि चतुर्व्यूहबोधकपाञ्चरात्रधर्मस्य भगवद्गीतायां व्यूहस्यानुल्लेखाद् गीतातो नवीनत्वं कथयन्ति। परन्तु नैतद्रोचते विद्वद्भ्यः। यतो गीता न चतुर्व्यूहवर्णनार्थं प्रवृत्ता, अतो गीतायां निर्देशाभावो न पाञ्चरात्रधर्मास्तित्वाभावं साधयति। किञ्च शान्तिपर्वस्थनारायणीयधर्मालोचने सुतरां निश्चेतुं शक्यते, गीतायां पाञ्चरात्रस्था एव धर्माः श्रीकृष्णेनार्जुनं प्रत्युक्ता इति। तथाहि। जनमेजयप्रश्नोत्तरप्रसङ्गे वैशंपायनेन नारायणतोऽयं धर्मः

नारदेन प्राप्तः स एव हरिगीतासु-भवद्गीतासूक्त इति कथितम्(१)। तथा पुनस्तत्रैवैकान्तधर्मस्य-पाञ्चरात्रधर्मस्य श्रेष्ठतां प्रदर्श्य जनमेजयेन केनायं धर्मः कथित इति प्रश्नस्योत्तरसमये वैशंपायनेनोक्तं युद्धेष्वर्जुने विमनस्के जाते श्रीभगवता स्वयं गीत इति (२)। तथा गीतायां धर्मप्रवर्तकपुरुषपरम्परोक्तिप्रसङ्गे यथा विवस्वदादिपरम्परोक्तिर्दृश्यते तथैव तां परम्परां विस्तीर्यात्राप्युक्तिरस्ति। तथा यतिधर्म एकान्तधर्मश्च पूर्वं हरिगीतायामुक्त इति च स्पष्टं कथितम्।(३) एतेनेदं स्पष्टं भवति चतुर्व्यूहादिविचारयुक्तो नैष्कर्म्यलक्षणो भागवतधर्मो गीतायां प्रोक्त इति महाभारतसमये कल्पना सिद्धान्तरूपा प्रचलितासीदिति। किञ्चैकान्तधर्मे चतुर्व्यूहकल्पनावदेकव्यूहद्विव्यूह-त्रिव्यूहादिकल्पनाप्यासीदिति महाभारतस्थनारायणीयोपा-

---

(१) कथितो हरिगीतासु समासविधिकल्पतः। इति (शां०अ०३४६,१०)

(२) नूनमेकान्तधर्मोऽयं श्रेष्ठो नारायणप्रियः।

........................ .........

केनैष धर्मः कथित्तो देवेन ऋषिणापि वा।
एकान्तिनां च का चर्या कदा चोत्पादिता विभो॥

....................................

समुपोढेष्वनीकेषु कुरुपाण्डवयोर्मृधे।
अर्जुने विमनस्के च गीता भगवता स्वयम्॥ इति (शां० ३४८,८)

(३) आदित्ये सवितुर्ज्येष्ठे विवस्वान् जगृहे ततः।
त्रेतायुगादौ च ततो विवस्वान् मनवे ददौ।
मनुश्च लोकभूत्यर्थं सुतायेक्ष्वाकवे ददौ।
इक्ष्वाकुणा च कथितो व्याप्य लोकानवस्थितः॥

.........................................

यतीनां च यो धर्मः स ते पूर्वं नृपोत्तम।
कथितो हरिगितासु समासविधिकल्पितः॥ इति (शां०अ०३४८)

ख्यानतो लभ्यते (१)। गीतायां चतुर्व्यूहकल्पनायाः प्राप्त्यभावेऽप्येकव्यूहकल्पनाऽवश्यं प्रतीयत एव (२)। तथा एकान्तधर्मस्यात्र सामन्यतः प्रदर्शितं स्वरूपं (३) संक्षेपतो गीतायामुपलभ्यत एव(४)।

अन्यतोऽप्ययं समयो निर्धारयितुं शक्यते। तथाहि। शिलालेखविचारचतुरैः श्रीमद्भाण्डारकरमहोदयैः सिद्धान्तिता वासुदेवादिपूजाविषये विचारा एते। "राजपुतानाख्ये देशविभागे घेसुण्डिनामके ग्रामे समुपलब्धे शिलालेखे सङ्कर्षणवासुदेवयोर्मन्दिरस्य परितः प्राकारो निर्मित इति लेखः परिदृश्यतेऽयं च लेखः क्रिस्ततः शतद्वयवर्षतः प्राक्तनः। नानाघाटसंज्ञके ग्रामे गुहायां दृश्यमाने शिलालेखे सङ्कर्षणवासुदेवशब्दघटितः

(१) एकव्यूहविभागो वा क्वचिद्द्विर्व्यूहसंज्ञितः।
त्रिर्व्यूहश्चापि संङ्ख्यातश्चतुर्व्यूहश्च दृश्यते॥ (शां०अ०३४८-५७)

(२) बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः॥ इति (भ०गी०७,८१)
अत्र शाङ्करभाष्यम्—
'मां वासुदेवं-प्रत्यगात्मानं प्रत्यक्षतः प्रतिपद्यते'। इति

(३) हरिरेवहि क्षेत्रज्ञो निर्ममो निष्कलस्तथा।
.......................................
जीवश्च सर्वभूतेषु पञ्चभूतगुणातिगः॥
एष लोकविधिर्धीमानेष लोकविसर्गकृत्॥
अकर्ता चैव कर्ता च कार्यं कारणमेव च।
यथेच्छति तथा राजन् क्रीडते पुरुषोऽव्ययः॥
एष एकान्तधर्मस्ते कीर्तितो नृपसत्तम। इति (शां०३४८,५८-६१)

(४) 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत'। (गी०अ०१३-१)
'सर्वभूतस्थितं यो माम्'। (गी०अ०६-३१)
'कुर्वन्नपि न लिप्यते'। (गी०५-७)
'जगतः प्रभवः प्रलयस्तथा'। इत्यादिकम्। (गी०७-६)

मङ्गलश्लोकः समुपलभ्यते। अयं च लेखः क्रिस्ततोऽव्यवहितपूर्वशतक उट्टङ्कितः। बेसनगरसंज्ञके ग्रामे समुपलब्धे शिलालेखे वासुदेवस्य तृप्तये गरुडध्वजस्तम्भः हेलियोदारा इत्यनेन भागवतेन प्रतिष्ठापित इति लिखितमस्ति। अयं च क्रिस्ततः पूर्वं द्वितीयशतकस्य प्रथमभागे भारतदेशे समागत इति। अनेन विज्ञायते वासुदेवपूजा तत्पूजकानां भागवतेति संज्ञा च तदानीमासीदिति'। किञ्च पाणिनेः कालात्पूर्वकालेऽपि वासुदेवादिकस्य देवतावत्पूज्यत्वं महापुरुषत्वं च प्रसिद्धमासीदिति 'वासुदेवार्जुनाभ्यां वुञ्' इति सूत्रादेतत्सूत्रभाष्याच्च ज्ञायते। एवं च क्रिस्ततः पूर्वं प्रायः वर्षशतकचतुष्टयकालतः प्रमितवासुदेवादिव्यूहस्य पूजादिप्रकारबोधकानां केषांश्चित् पाञ्चरात्राणां समयः स्यादितिनिश्चये न काचिदप्यापत्तिः संभवति।

अधुनेनं विचार्यते—अयं पाञ्चरात्रपदवाच्यः संहितासमूहः किं श्रुतिमूलक उत श्रुतिवदयमपि स्वतन्त्र एव इति। श्रुतिमूलकत्वमेवास्य पाञ्चरात्रसंहितान्तर्गतेश्वरसंहितावलोकनत निश्चीयते (१)। सा च श्रुतिरेकायनसंज्ञिका शुक्लयजुर्वेदवच्चतुर्वेदबहिर्भूता कण्वशाखान्तर्गता वा (२) शाण्डिल्यादिना संकर्षणादितो याज्ञवल्क्येन सूर्यत इव लब्धेति(३)एकायनं नाम तस्य शाण्डिल्यलब्धवेदस्य मोक्षगमनायान्य-

---

(१) मूलवेदानुसारेण च्छन्दसानुष्टुभेन च।
सात्वतं पौष्करं चैव जयाख्येत्येवमादिकम्॥ इति (ई० सं०१)

(२) एतन्नागेशकृतकण्वशाखामहिमासंग्रहसंज्ञकमद्रासपुस्तकालस्थग्रन्थतो ज्ञायते। अत्र जयासंहिता-( इंग्लिश )-भूमिकाटिप्पणी द्रष्टव्या।

(३) पुरा तोताद्रिशिखरे शाण्डिल्योऽपि महामुनिः।
समाहितमना भूत्वा तपस्तप्त्वा सुदारुणम्॥
द्वापरस्य युगस्यान्त आदौ कलियुगस्य च।
साक्षात् सङ्कर्षणाल्लब्ध्वा वेदमेकायनाभिधम्॥ इति (ई०सं०अ०१)

मार्गासिद्धत्वादेव संजातमित्यपि तत एव ज्ञायते (१)। अस्यैकायनवेदस्योल्लेखः छान्दोग्योपनिषदि भूमविद्यायां नारदसनत्कुमारसंवादे दरीदृश्यते (२)। यद्यपि तत्रैकायनशब्दस्यार्थः श्रीमच्छङ्कराचार्यैर्नीतिविद्येति कृतः 'वाकोवाक्यं-तर्कशास्त्रम्, एकायनं-नीतिशास्त्रम्' इति। तथापि सोऽर्थो वाकोवाक्यपदस्य तर्कशास्त्रार्थकरणवदन्येषां न मान्यः। वाकोवाक्यपदं पातञ्जलमहाभाष्ये पस्पशाह्निक आगतं तत्र तस्यार्थः कैयटेन उक्तिप्रत्युक्तिरूपो ग्रन्थविशेष इति निर्णीतः (३)। एवञ्चैकायनपदस्य श्रीव्यासादिवचनप्रामाण्याद् (४) नीतिविद्याभिन्नो वेदरूपार्थोऽप्यन्यग्रन्थकारोक्तः (५) संभवत्येव। एवं

---

(१) शृणुध्वं मुनयः सर्वे वेदमेकायनाभिधम्॥

..............................

मोक्षायनाय वै पन्था एतदन्यो न विद्यते॥
तस्मादेकायनं नाम प्रवदन्ति मनीषिणः।

तथा—एष एकायनो वेदः प्रख्यातः सर्वतो भुवि॥ इति (ईश्व० अ०१)

(२) ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदं······
दैवं निधिं वाकोवाक्यमेकायनं देवविद्यामिति। (छां०७-१-२)

(३) सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदाः··········नवधा आथर्वणो वेदः वाकोवाक्यमितिहासः पुराणमिति। इति (व्या० भा० आ०१)
अत्र कैयटः-वाकोवाक्यशब्देनोक्तिप्रत्युक्तिरूपो ग्रन्थ उच्यते······।
यथा किंस्विदावपनं महत् भूमिरावपनं महदिति।

(४) यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च।
गृणन्ति सत्यधर्माणः सत्यं सत्येषु सामसु॥ इति(श्रीमन्महाभारते)
अत्रोपनिषदादिसाहचर्यान्नीतिविद्याभिन्नोऽर्थोऽभिप्रेतः।

(५) ऋग्वेदं पूर्वदिग्भागे यजुर्वेदं तु दक्षिणे।
पश्चिमे सामवेदं स्यादाथर्वं चोत्तरे भवेत्॥
एकायनीयशाखोत्थमन्त्रान्सर्वासु दिक्षु च॥ इति

तथा—ततः प्रीतमना नाथ साक्षात्स ब्रह्मसंज्ञकम्।
वेदमेकायनं ब्रह्म व्याकर्तुमकुतोभयम्॥ इति (महाकालसंहितायाम्)।
वेदमेकायनं नाम वेदानां शिरसि स्थितम्॥
तदर्थकं पाञ्चरात्रं मोक्षदं तत्क्रियावताम्॥ इति (श्रीप्रश्नसंहितायाम्)।

स्पन्दप्रदीपिकायामस्य पाञ्चरात्रश्रुति-पाञ्चरात्रोपनिषद्रूपेणोल्लेखोऽपि सम्यगुपपद्यते (१)। तमेकायनं वेदं मूलतया स्वीकृत्य सर्ववर्णाना-मनुग्रहार्थं सङ्कर्षणशाण्डिल्यप्रभृतिभिरानुष्टुभेन च्छन्दसा युक्तं (२) सङ्ख्यया द्वादशसहस्रतो नाधिकं संहितास्वरूपं (३) जनाभीष्टसं-पादकमुक्तम्। स संहितासमुदायः सात्वतादिकः पाञ्चरात्रपदेन जेगीयते लोके।

अत्रायं विचार आवश्यकः, पाञ्चरात्रं प्रमाणं न वेति। अत्र प्रामाण्यविचारस्योपेक्षणे पाञ्चरात्रशास्त्रस्योपादेयता न संभवत्येव। श्रीमद्बादरायणसूत्रेषु केषांचिन्मतेन पाञ्चरात्रमतखण्डनेना-

---

(१) पाञ्चरात्रश्रुतावपि-यद्वत्सोपानेन प्रासादमारुहेत् प्लवेन नदीं तरेत् तद्वच्छास्त्रेण हि भगवान् शास्त्रादवगन्तव्यः इति (स्पं० प्र० प० २)
पञ्चरात्रोपनिषदि च-ज्ञाता च ज्ञेयं च वक्ता च वाच्यं च भोक्ता च भोग्यं च। इत्यादि (स्पं० प्र० प० ४०)

(२) अनुग्रहार्थं वर्णानां योग्यतापादनाय च।
तथा जनानां सर्वेषामभीष्टफलसिद्धये॥
मूलवेदानुसारेण च्छन्दसानुष्टुभेन च।
सात्वतं पौष्करं चैव जयाख्येत्येवमादिकम्॥
दिव्यं सच्छास्त्रजालं तदुक्त्वा सङ्कर्षणादिभिः।
प्रवर्तयामास भुवि सर्वलोकहितैषिभिः॥ इति (ईश्व० अ० १)

(३) द्विषट्सहस्रपर्यन्तं संहिताख्यं सदागमम्।
ये चान्ये चान्तराला वै शास्त्रार्थेनाधिकाः शतैः।
सर्वेषां संहिता संज्ञा बोद्धव्या कमलोद्भव॥ इति (पौ० सं०)

प्रामाण्यम् ( १ ) । केषांचिन्मतेन पाञ्चरात्रमतमण्डनेन प्रामाण्यमिति ( २ ) प्रकारद्वयदर्शनेन भवति सामान्यजनानां संदेहस्तदर्थमयं विचार आवश्यकः । श्रीमदाचार्यशङ्करमतालोचन इदं सुस्पष्टं ज्ञायते–संकर्षणादिजीवस्योत्पत्त्यादिः सूत्रप्रतिषिद्धा, अनेकेश्वरकल्पना च । तत्र जीवस्योत्पत्तिर्यासु पाञ्चरात्रसंहितासु न प्रतिपादिता नचानेकेश्वरकल्पना तासां प्रामाण्यस्य स्वीकारोऽभिप्रेत एव । सन्ति च कानिच्चित्पाञ्चरात्राणि विरुद्धार्थबोधकानि तेषामप्रामाण्यं पाञ्चरात्रसंहितायामेव प्रतिपादितमुपलभ्यते—'पञ्चरात्रं बहुविधं बहुधा भाषितं परैः । प्रमाणानां विरोधेन तद्यथार्थं नचेदृशम्'॥ (शां०सं०अं०१-४-७६) यद्यप्युपसंहारे 'चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधिगत-

(१) श्रीशङ्कराचार्यमते "उत्पत्त्यसंभवात्" इत्यधिकरणे (वे०सू०२-२-४२)'तत्र भागवता मन्यन्ते भगवानेको वासुदेवो निरञ्जनज्ञानस्वरूपः परमार्थतत्त्वं, स चतुर्धात्मानं प्रविभज्य प्रतिष्ठितो वासुदेवव्यूहरूपेण संकर्षणव्यूहरूपेण···इति । अत्र ब्रूमः । न वासुदेवसंज्ञकात्परमात्मनः सङ्कर्षणसंज्ञकस्य जीवस्योत्पत्तिः संभवति । अनित्यत्वादिदोषप्रसङ्गात् ।···········विप्रतिषेधश्चास्मिन् शास्त्रे बहुविध उपलभ्यते गुणगुणित्वकल्पनादिलक्षणः । ·········वेदविप्रतिषेधश्च भवति । चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधिगतवानित्यादिवेदनिन्दादर्शनात् । तस्मादसङ्गतैषा कल्पनेति सिद्धम् "इति ।

(२) अत्राधिकरणे श्रीरामानुजाचार्यमते–"जीवस्योत्पत्तिस्तत्राप्यसिद्धैवेति जीवोत्पत्तिवादनिमित्ताप्रामाण्यशङ्का दूरोत्सारिता । यश्चैष केषांचिदुद्घोषः साङ्गेषु वेदेषु निष्ठामलभमानः शाण्डिल्यः पञ्चरात्रशास्त्रमधीतवानिति । साङ्गेषु वेदेषु पुरुषार्थनिष्ठा न लब्धेति वचनाद् वेदविरुद्धं तन्त्रमिति, सोऽप्यनाघ्रातवेदवचसामनाकलिततदुपबृंहणन्यायकलापानां श्रद्धामात्रविजृम्भितः । इति ( वे०सू०२-२-३९ )

रान्' इतिवाक्यदर्शनेन शाण्डिल्यप्रोक्तशास्त्रमेवाभिप्रेतमिति संज्ञायते, तथापि श्रीमदाचार्याः 'चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा' इत्यादिकथनमेव कटाक्षयन्ति न तु तच्छास्त्रमिति ज्ञेयम्। एवञ्च सर्वांशेन वा कियताप्यंशेन वा प्रामाण्यं पाञ्चरात्रस्य सुप्रतिष्ठितमेव। अत एव जमदग्न्यादिस्मृतिकारैः (१) व्यासवाल्मिकिप्रभृतिभिरैतिहासिकैः (२) वराहादिपुराणकर्तृभिर्व्यासचरणैश्च (३) वेदेन सह पाञ्चरात्रस्य प्रमाणग्रन्थेषूल्लेखः कृतः सङ्गच्छते।

पाञ्चरात्रविचारप्रसङ्गे कति पाञ्चरात्राणि विद्यन्त इति विचारोऽसङ्गतो नैव भवेदित्यभिप्रायेण तदुपलब्धवर्णनं प्रदर्श्यते। 'पञ्चरात्रं बहुविधं बहुधा भाषितं परैः' (शां०अ०१·४-७६) इत्यादिवचनदर्शनेन सामान्यतः पाञ्चरात्रशास्त्राणामनेकप्रकारकत्वमिति ज्ञायते। परन्तु नारदपञ्चरात्रनाम्ना प्रसिद्धे ज्येष्ठारामसुकुन्दजीमुद्रितग्रन्थे स्पष्टमिदमुपलभ्यते—'पञ्चरात्रं सप्तविधं ज्ञानिनां ज्ञानदं परम्। ब्राह्मं शैवं च कौमारं वासिष्ठं कापिलं परम्। गोतमीयं नारदीयमिदं सप्तविधं स्मृतम्॥ इति (अ०१-५७)। एतद्दर्शनेन नारदेन यथा नारायणतो ज्ञानमुपलभ्य पाञ्चरात्रशास्त्रप्रवर्तनं कृतं तथा ब्रह्मादिभिरपि ततो ज्ञानमुपलभ्य शास्त्रप्रवर्तनं कृतमिति

(१) वैदिकेन विधानेन पूजां कुर्याद्धरेस्ततः।
अलाभे वेदमन्त्राणां पाञ्चरात्रोदितेन वा॥ ( जमदग्निस्मृतिः )

( २ ) पुराणैश्चैव वेदैश्च पाञ्चरात्रैस्तथैव च। इति ( उत्तररामायणम्। )
इदं महोपनिषदं चतुर्वेदसमन्वितम्।
साङ्ख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम्॥ इति ( म०भा०शां० )

( ३ ) आचार्ये पाञ्चरात्राणां सहस्रगुणितं भवेत्। इति ( वरा०पु० )
ऋगाद्या भारतं शास्त्रं पञ्चरात्रमथाखिलम्॥ इति ( ब्रह्म० पु० )
वेदेन पाञ्चरात्रेण भक्त्या यज्ञेन च द्विज। इति ( कूर्म०पु० )
शास्त्रं च वेदाः स्मृतयः पुराणं च तदात्मकम्।
इतिहासः पाञ्चरात्रं भारतं च महामते॥ इति ( स्कन्द०पु० )

ज्ञायते (१) । अस्यां शाण्डिल्यसंहितायां प्रथमांशे चतुर्थाध्याये भक्तिशास्त्रपरम्पराप्रवर्तकेषु ब्रह्मादीनां नामान्युपलभ्यन्ते तद्दर्शनेना प्येतत्कल्पनं सम्यमितिज्ञातुं शक्यम् ।

अग्निपुराणत. पञ्चरात्राणि सप्तरात्राणि च पूर्वं सर्वाण्यपि हयग्रीवेणोक्तानि, तानि मुनिभिः पञ्चविंशतिसङ्ख्या हयशीर्षप्रभृतीनि व्यस्तानीति ज्ञायते (२) । एतल्लेखेनेदमपि ज्ञायते—हयग्रीवेण प्रथमतस्तन्त्रमुक्तं तद्व्यस्य नारदेना-

---

(१) परन्तु पूर्वोक्तज्येष्ठाराममुकुन्दजीप्रभृतिभिर्मुद्रितनारदपञ्चरात्रावलोकनतो नारदकृतपञ्चरात्रतः पूर्वं षट् पञ्चरात्राण्यासन्, तानि दृष्ट्वा शङ्करतो ज्ञानं संप्राप्य च नारदेन स्वकीयं पञ्चरात्रं प्रणीतमिति प्रत्युत विपरीतं ज्ञायते–

षट्पञ्चरात्रं वेदाश्च पुराणानि च सर्वशः ।
इतिहासं धर्मशास्त्रं शास्त्रं च सिद्धियोगजम् ॥
दृष्ट्वा सर्वं समालोक्य ज्ञानं संप्राप्य शङ्करात् ।
ज्ञानामृतं पञ्चरात्रं चकार नारदो मुनिः ॥ (रात्र१अ०१-४८,६६)

प्रकृतशाण्डिल्यसंहितातोऽप्येतद् ज्ञातुं सुशकम् । अत्र तृतीयपरिशिष्टं द्रष्टव्यम् ।

(२) प्रोक्तानि पञ्चरात्राणि सप्तरात्राणि वै मया ।
व्यस्तानि मुनिभिर्लोके पञ्चविंशतिसङ्ख्यया ॥
हयशीर्षं तन्त्रमाद्यं तन्त्रं त्रैलोक्यमोहनम् ।
वैभवं पौष्करं तन्त्रं प्रह्लादं गार्ग्यगालवम् ॥
नारदीयं च सप्रश्नं शाण्डिल्यं वैश्वकं तथा ।
सत्योक्तं शौवकं तन्त्रं वासिष्ठं ज्ञानसागरम् ॥
स्वायम्भुवं कापिलञ्च तार्क्ष्यं नारायणीयकम् ।
आत्रेयं नारसिंहाख्यमानन्दाख्यं तथारुणम् ॥
बौधायनं तथार्षन्तु विश्वोक्तं ········ ॥ इति (अ०पु०अ०३९,१-५)

न्यमुनिभिरिव स्वकीयं तन्त्रमुक्तमिति । एतद्नारद-पाञ्चरात्रसंज्ञकमुद्रितग्रन्थस्थेन पूर्वप्रदर्शितलेखेन सह प्रायः संवाद्येव। अत्रेयं शङ्का प्रादुर्भवति श्वेतदीपस्थेन नारायणेन नारदायोपदिष्टं यत् पाञ्चरात्रविधानं तदेव नारदेन ग्रन्थरूपेणोपनिबद्धमुत हयग्रीवादिप्रोक्तं पाञ्चरात्रं दृष्ट्वा स्वकीयं रचितमथवा तदेव विभज्य निर्मितमिति। अत्रेदं समाधानं प्रतिभाति। श्वेतद्वीपगतेन नारदेन नारायणत उपलब्धमपि विधानं शास्त्ररूपेण निर्माणसमये पूर्वमनेकैः श्वेतद्वीपे नारायणतो ज्ञानं लब्ध्वा (१) तदनुसारीणि पाञ्चरात्राणि प्रणितानि, तानि दृष्ट्वा नारदेन स्वकीयं पाञ्चरात्रं निर्मितमितिकल्पने सर्वं समञ्जसं भवति। नारदतोऽपि पूर्वं चित्रशिखण्डिभिर्नारायणप्रसादत उपासनाप्रकारः प्राप्तः शास्त्ररूपेण प्रणीत इति च श्रीमन्महाभारतीयशान्तिपर्वतः सुस्पष्टं ज्ञायते (२)। एवञ्च काश्चित्पाञ्चरात्रसंहिता ज्ञानसारभारद्वाजसंहिताप्रभृतयः साक्षाद् नारदेनोपदिष्टतया नारदपाञ्चरात्रान्तर्गता एव, काश्चन नारदेनानुपूर्वीरूपेणानुक्ता अपि नारदप्रतिपादिततत्वप्रतिपादकतया नारदपाञ्चरात्रपदबोध्या इति। यथा शाण्डिल्यसंहिताप्रभृतयः।

---

(१) श्वेतद्वीपे पुरा विष्णुं क्षीरसागरशायिनम्।
ब्रह्माद्या देवताःसर्वे मुनयश्च तपोधनाः॥
समाराध्य महात्मानो भक्त्या परमया विभुम्।
ऋचां च यजुषां चापि साम्नामाङ्गिरसामपि॥
साङ्ख्यानामपि योगानां सर्वोपनिषदां गिराम्।
सर्वेषामपि शास्त्राणां सारभूतं हरेः प्रियम्।
रहस्यं पञ्चरात्राख्यं काले कालेऽभिलेभिरे॥ (शां०अं०१अ०४,२४-२७)

(२) ये हि ते ऋषयः ख्याताः सप्त चित्रशिखण्डिनः।
तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम्।
..............................
आराध्य तपसा देवं हरिं नारायणं प्रभुम्॥ इति (भा०शां०अ०३३५)

पञ्चरात्रसंहिता विष्णुतिलकादिग्रन्थावलोकनतः सार्धकोटिश्लोकपरिमिता आसन्निति ज्ञायते। अधुना तु नैतत्परिमिता उपलभ्यते। पाञ्चरात्रसंहितानां नामत उल्लेखोऽग्निपुराण-हयशीर्षसंहिता-कापिञ्जलसंहिता—विष्णुसंहितादिषूपलभ्यते। एताः सर्वा अपि पाञ्चरात्रसंहिता मूलवेदानुसारेण हरिणा स्वयं सङ्कर्षणप्रभृतिभ्य उपदिष्टाः (१)। अष्टोत्तरशतसङ्ख्यापरिमितासु पाञ्चरात्रसंहितासु सात्वताद्यास्तिस्रः संहिताः प्रधानाः। एतासामेव संहितानां व्याख्याभूता सर्वा अपि संहिता इति जयासंहितास्थलेखनतो ज्ञायते (२)। सर्वोऽप्ययं संहितादिसमुदाय आगमपदवाच्यः (३)। स चागमसिद्धान्त-मन्त्रसंज्ञित-तन्त्र-तन्त्रान्तरभेदेन चतुष्प्रकारः (४)। अस्य लक्षणं भेदादिकं चेश्वरसंहितायामेकविंशत्यध्याये सुस्पष्टं तत्तत एव ज्ञेयम्। दिव्यसात्विकादिरूपेणाप्यस्य

---

(१) सात्वतं पौष्करं चैव जयाख्यं च तथैव च।
एवमादीनि दिव्यानि शास्त्राणि हरिणा स्वयम्॥
मूलवेदानुसारेण प्रोक्तानि हितकाम्यया॥ इति (ई०स०अ०१-६५)

(२) तन्त्रोऽप्यष्टोत्तरशते पारमेश्वरसंहिता।
पौष्करार्थविवृत्यर्था व्याख्यारूपावतारिता॥
सात्वतस्य विवृत्यर्थमीश्वरं तन्त्रमुत्तमम्।
जयाख्यस्य तन्त्रस्य व्याख्यानं पाद्ममुच्यते॥ इति (जयासं०प०१,६-७)

तथा—सात्वतं पौष्करं चैव जयाख्यं तन्त्रमुत्तम।
.................................
सारं सात्वतशास्त्रस्य रहस्यं प्राज्ञसंमतम्॥
.................................
अन्यानि तु तन्त्राणि भगवन्मुखनिर्गतम।
सारं समुपजीव्यैव समासव्यासधारणैः।
व्याख्योपबृंहणन्यायाद् व्यापितानि तथा तथा॥ इति (जया०प०१)

(३) चतुर्धाभेदभिन्नोऽयं पाञ्चरात्राख्य आगमः। इति (ई०अ०२१-५६०)

(४) पूर्वमागमसिद्धान्तं द्वितीयं मन्त्रसंज्ञितम्।
तृतीयं तन्त्रमित्युक्तमन्यत्तन्त्रान्तरं भवेत्॥ इति (ई०अ० २१-५६१)

भेद ईश्वरसंहितायां प्रथमाध्याये दृश्यते (१)। अस्यैकायनशाखा-मूलकस्य पाञ्चरात्रस्य श्रुति—उपनिषद्–तन्त्र-संहितास्वरूपेणापि भेद आसीदित्युत्पलाचार्यरचितस्पन्दप्रदीपिकावलोकनतः सुस्पष्टं ज्ञायते ( २ )।

अस्त्वधुना शाण्डिल्यसंहिताविषयको विचार आरभ्यते। शाण्डिल्यसंहिताया उल्लेखो यामुनाचार्येण स्वकीय आगमप्रामाण्यसंज्ञके ग्रन्थे कृतः। ततोऽपि पूर्वं विद्यमानाग्निपुराणीयलेखतः शाण्डिल्येन हयग्रीवप्रणीतं तन्त्रं दृष्ट्वा स्वकीयं तन्त्रं प्रणीतमिति ज्ञायते ( ३ )। संहितातो भिन्नस्य तन्त्रस्यानुपलब्धे-

---

( १ ) वासुदेवेन यत्प्रोक्तं शास्त्रं भगवता स्वयम्।
अनुष्टुप्छन्दोबन्धेन समासव्यासभेदतः॥
तथैव ब्रह्मरुद्रेन्द्रप्रमुखैश्च प्रवर्तितम्।
लोकेष्वपि च दिव्येषु तद्दिव्यं मुनिसत्तमाः॥
स्वयं प्रणीतं यच्छास्त्रं तज्ज्ञेयं मुनिभाषितम्।
एतत्तु त्रिविधं विद्धि सात्विकादिविभेदतः॥इति(ई०अ०१,५४-५५-५७)

( २ ) पाञ्चरात्रश्रुतावपि यद्वत्सोपानेन प्रासादमारुहेत्०। इत्यादि स्पं०प्र०प०२)
पाञ्चरात्रोपनिषदि च ज्ञाता च ज्ञेयं च वक्ता च वाच्यं च०।
इत्यादि ( स्पं०प्र०प०४० )

तथा च पाञ्चरात्रे-यदात्मनि सर्वभूतानि पश्यति आत्मानं च०। इत्यादि ( स्पं०प्र०प०२६ )

संहितावचनानि तु बहुत्र सात्वतायां जयाख्यामिति तत्तन्नामकीर्तनपूर्वकं निर्दिष्टान्युपलभ्यन्ते।

( ३ ) प्रोक्तानि पञ्चरात्राणि सप्तरात्राणि वै मया।
व्यस्तानि मुनिभिर्लोके पञ्चविंशतिसङ्ख्यया॥
.......................................
नारदीयञ्च सम्प्रश्नं शाण्डिल्यं वैश्वकं तथा। ( अ०पु०अ०३९ )

स्ततश्च तन्त्रपदेन संहितैव विवक्षिता स्यात् (१)। एवञ्चास्याः शाण्डिल्यप्रणीतसंहितायाः कालोऽग्निपुराणस्य कालतः पूर्वं वर्षशतकपरिमित आयाति। अग्निपुराणस्य कालस्त्वीशवीयषष्ठशतक इति निर्धारयितुं शक्यते। तथाहि। अग्निपुराणे धर्मशास्त्रसारबोधके १६२ अध्याये यानि धर्मशास्त्राणि दृष्ट्वा धर्मशास्त्रसारं तत्र संगृहीतं तेषां नामान्यागतान्यतो ज्ञायतेऽग्निना तत्तुल्यधर्मनियमकथनं कृतमिति। अतोऽग्निपुराणस्य वह्निधर्मशास्त्ररूपेणापि प्रसिद्धिरासीत्। एतादृश उल्लेखो वृद्धशातातपस्मृतिग्रन्थे स्पष्टतया दृश्यते (२)। अतो वृद्धशातातपस्मृतिकालात्पूर्वमेकशतकपरिमितं कालमतोत्याग्निपुराणस्य स्थितिरासीदितिकल्पने नासङ्गतिदोषः। वृद्धशातातपस्मृतिवचनानामुल्लेखः श्रीशङ्कराचार्यैर्विष्णुसहस्रनामभाष्ये कृतः समुपलभ्यते। श्रीशङ्कराचार्याणां स्थितिरीशवीयाष्टमशतकपरिमिते काल आसीदिति विदुषां मतम्। एवञ्च श्रीशङ्कराचार्याणां पूर्वमेकशतकमतीत्य स्थितवृद्धशातातपस्मृतेः कालः सप्तमशतकपरिमितो पर्यवस्यति। अनयैव पद्धत्याग्निपुराणस्य काल षष्ठशतकपरिमितः शाण्डिल्यतन्त्रस्य-संहितास्वरूपस्य पञ्चमशतकपरिमितश्च पर्यवस्यति। एवं स एवान्येषामप्यग्निपुराणोल्लिखिततन्त्र-संहिताग्रन्थानामिति निश्चीयते।

अस्त्वेवं शाण्डिल्यसंहितायाः काले निश्चिते शाण्डिल्यसंहितापदेन जयासंहितायाः ग्रहणं प्रकृतसंहिताया वेति शङ्का मनसि प्रादुर्भवति, यतः शाण्डिल्यसंहितापदं सामान्यतः शाण्डिल्येन प्रोक्तायाः

---

(१) संहिताया अपि तन्त्रपदेनोल्लेखो दरीदृश्यते, यथा—

सात्वतं पौष्करं चैव जयाख्यं तन्त्रमुत्तमम्।

तथा— अन्यानि तु तन्त्राणि ..................

तथा— तन्त्रेऽप्यष्टोत्तरशते परमेश्वरसंहिता।

..........................................

सात्वतस्य विवृत्यर्थमीश्वरं तन्त्रमुत्तमम्।

जयाख्यस्य तन्त्रस्य ............॥ इति (जयासं०प० १)

(२) पितुः सा भजते गोत्रमूर्ध्वं तु पतिपितृकम्।

इति प्रोक्तं पुरावह्नि-धर्मशास्त्रानुसारतः॥ ४३॥ इति (वृ०शा०स्मृ०)

संहिताया नाम संभवति। शाण्डिल्येन जयासंहिता प्रोक्ता (१) प्रकृतसंहिता च (२)। किञ्च प्रत्युत प्रकृतशाण्डिल्यसंहितायां श्रीशङ्कराचार्यप्रभृतिवल्लभाचार्यान्तानामग्निपुराणात्पश्चाद्भवानां नामोपलब्धेर्जयासंहितैव शाण्डिल्यप्रोक्तत्वादग्निपुराणनिर्दिष्टशाण्डिल्यतन्त्रपदेन ग्राह्येति प्रतिभाति। तथापि जयासंहितायाः शाण्डिल्यप्रोक्तत्वेऽपि तत्र जयेति नामदर्शनात् (३) कुत्रापि तस्याः शाण्डिल्यसंहितानाम्ना व्यवहाराभावाच्च जयासंहितायाः शाण्डिल्यसंहितापदेन ग्रहणं न संभवति। तर्हि प्रकृतशाण्डिल्यसंहितैव परिशेषात्स्वीकर्तव्येति स्थितम्। परन्त्वस्यां श्रीशङ्कराचार्यप्रभृतीनां नामनिर्देशाद् पूर्वोक्तो निश्चितः कालः स्वीकर्तुं न शक्यत इति शङ्का समुद्भवति, सा प्राचीनमते सर्वावरणमलापेते शाण्डिल्यचेतसि सार्वकालिकविषयस्फुरणस्य स्वीकारेण तादृशभविष्यत्कालिकश्रीशङ्कराचार्यप्रभृतीनां नामनिर्देशस्योपपन्नत्वेन समाधीयते। आधुनिकानां तु मते तस्याध्यायस्य प्रक्षिप्तत्वमथवान्यस्य शाण्डिल्यतन्त्रस्याग्निपुराणकाले स्थितस्य परन्त्वधुना लुप्तस्याग्निपुराणे निर्देशः, इयं तु

---

(१) कृतकृत्यो जगत्यस्मिन् शाण्डिल्यः श्रूयते भुवि।

......................................

तच्छृणुध्वं मुनिश्रेष्ठाः धर्मं संसारतारकम्।

यादृक् प्राप्तं मया पूर्वं परितुष्टाच्च नारदात्॥ इति (जयासं०प० १)

(२) अयं महर्षिः शाण्डिल्य आचार्यः सांप्रतं किल।

......................................

शिष्यः श्रीललितादेव्या व्यासस्य च महात्मनः॥

संहिता कथिता तेन सारभूतागमाम्बुधेः॥ (शां०-ख०४अ०१६)

(३) सात्वतं पौष्करं चैव जयाख्यं तन्त्रमुत्तमम्।

तथा—जयाख्यस्य तन्त्रस्य व्याख्यानं पाद्ममुच्यते॥

तथा—प्रोक्ता त्रैलोक्यगुरुणा पृच्छते नारदाय तु।

सारभूतं समुद्धृत्य संहितामृतगर्भिणी॥

......................................

जयाख्यं निषदं तन्त्रम्..........॥

तथा—जयेति विमलं नाम प्रणीतं विश्वकर्मणा। इति (जयासं०प०१)

संहिता सर्वथैवात्रनिर्दिष्टश्रीवल्लभाचार्यसमयानन्तरं प्रादुर्भूतेति तस्याः समाधानं संभवेत्। विद्वद्वरैरत्र विषये विनिर्णेयम्।

अधुना पाञ्चरात्र-शाण्डिल्यसंहितासिद्धान्तप्रदर्शनात्प्रागस्याः संहितायाः प्रणेता शाण्डिल्यः क इति विचारणमावश्यकम्। यतः शाण्डिल्यानामनेकेषामुपलब्धेः। प्रकृतशाण्डिल्यसंहितायां शाण्डिल्यविषय एतादृशो निर्णय उपलभ्यते। प्रथमः शाण्डिल्यो ब्रह्मशाण्डिल्यनाम्ना प्रसिद्धः, यस्य सामवेदे विद्यास्ति, (१) स च मन्त्ररूपो मन्त्राभिमानिदेवतावद् न तु शरीरधारी मनुष्यः (२)। द्वितीयो वेदत्रयस्य भक्तिविद्यायाश्चाध्येता वेदशाण्डिल्यनाम्ना प्रसिद्धो वंशाध्यायवर्णितोऽस्ति (३)। तृतीयो महर्षिः शाण्डिल्यः प्रकृतसंहिताकर्ता।

अस्येदमितिवृत्तमुपलभ्यते—पूर्वस्मिन् जन्मनि गार्धभिसंज्ञकोऽयं वीरवैष्णवशासनस्य कर्ताऽवैदिकमार्गेण विष्णुपूजनतत्परो वैदिकमार्गनिन्दानिपुण आसीत। श्रीविष्णुना तस्य वेदमार्गविमुखत्वं

---

(१) अधुनावियं शाण्डिल्यविद्या वाजसनेयिशाखायामग्निरहस्ये श्रूयते। स्पष्टं चैतत् 'समान एवं चाभेदात्' (व्यास०३-३-१०) इत्येतत्सूत्रीयशाङ्करभाष्ये।

(२) आद्योऽसौ ब्रह्मशाण्डिल्यो विद्या यस्यास्ति सामसु। स च मन्त्रात्मको ज्ञेयोऽभिमानिदेवता यथा। (शां०अं०४अ०६,२६)

(३) द्वितीयो वेदशाण्डिल्यो वंशाध्याये निरूपितः। येनाधीता त्रयी विद्या भक्तिविद्या ह्यनुत्तमा॥ (शां०अं०४अ०१६-२७) एतद्बृहदारण्यके चतुर्थाध्याये पञ्चमब्राह्मणे 'कौण्डिन्यात्कौण्डिन्यः शाण्डिल्यात् शाण्डिल्यः' इति। तथा तत्रैव षष्ठाध्याये पञ्चमब्राह्मणे 'वामकक्षायणः शाण्डिल्याच्छाण्डिल्यो वात्स्यात्' इत्यादिना स्पष्टम्।

दृष्ट्वा नरके निपातनं कृतम् (१), परन्तु ततो दयालुना तेन नारायणेन भक्तोऽयमिति मत्वोद्धृतः। तदा विप्रकुल उत्पन्नो वर्णाश्रमधर्मपरायणो जगन्नाथप्रसादान्नमत्तुं साधु न मने। तदा तत्रापि तिरस्कारं प्राप्तो माहात्म्यं बुद्ध्वा प्रसादं भुक्त्वा वैदिको वैष्णवो महर्षिरभूत् (२)। स एकदा नवीननीरदश्यामं पीतवाससं शङ्खचक्रगदापद्माङ्कितं गोवर्धनधारिणं परमात्मानं ध्यातवान्, तदा स गोपालबालकैः सार्धं क्रीडमानः प्रादुरास। तदा प्रणन्तं शाण्डिल्यं भगवानुवाच त्वं वाञ्छितं वृणिवति। शाण्डिल्येन किमप्यनुक्ते भगवान् स्वयं शाण्डिल्याय स्वकीयस्वरूपस्य ज्ञानमन्यच्च प्रकाशयितुमाह-अहं निर्गुणो निष्क्रियो निरञ्जनोऽस्मि। आत्मरूपा ज्योतीरूपा मम लीलानाम्नी सख्यस्ति सा ममेष्टं सर्वं साध्नोति, त्वं निर्गुणां भक्तिमातिष्ठ, मम लीलादर्शनेच्छा तवास्ति चेन्मम योगमायेति काचिल्लीलाप्रतिहारिण्यस्ति

---

(१) वृद्धहारीतस्मृतावपि प्रायश्चरित्रमस्यैतादृशमुपलभ्यते। (श्लो०१८-१६३)

(२) तृतीयो गार्धभिः प्रोक्तो वीरवैष्णवशासनम्।
येन प्रोक्तं तामसानां सर्वेषां मुक्तयेऽपि च ॥ २८ ॥
विष्णोः समाश्रयं कृत्वा त्याज्यमन्याश्रयं ततः।
शिखासूत्रादिभिः किं स्यात्किंस्याद्वर्णाश्रमाश्रमैः ॥ २९ ॥
त्यक्त्वा विधिं निषेधं च हरिमेकं दृढाश्रितः।
.......................................
धिक्कृतः स च देवेन पातितो निरयेऽशुचौ ॥
पुनः समुद्धृतः सद्यो भक्तोऽयमिति विष्णुना ॥ ३१ ॥
स च विप्रकुले जातो हरिभक्तिसमाश्रितः।
.......................................
जगदीशप्रसादान्नं साधु मेने न चाशितुम्।
पुनश्च धिक्कृतस्तत्र माहात्म्यानवबोधतः ॥ ३३ ॥
श्रुत्वैवं तस्य माहात्म्यं कृत्वात्यन्तं समादरम्।
प्रसादान्नं वै जग्राह वैदिको वैष्णवोऽभवत्।
अयं महर्षिः शाण्डिल्य आचार्यः साम्प्रतं किल ॥ ३४ ॥
इति (शां०अं०४अ०१६)

सा त्वं भ्रामयेदत एतां मद्दत्तां मालां स्वीकुरु तेन तव लीलायां प्रवेशो भवेदिति। ततः शाण्डिल्यप्रार्थनया परमात्मना ललितादेव्युपदेश योग्यस्थानं निर्दिश्य ललिता त्वामुपदेक्ष्यतीत्युक्त्वा तस्मै मन्त्रं प्रदायान्तर्हितम्। ततः शाण्डिल्यो हरिणा प्रदर्शितां दिशं नत्वा स्थितस्ततो ललितादेवी स्वयमागत्य तं लीलाशतनामस्तोत्रं भक्ताचारं चोक्त्वान्तर्हिता। शाण्डिल्योऽपि तत आरभ्य ललिताप्रदर्शिताचारमाचरितवान् (१)। ततः सूर्यात्सहस्रनामस्तोत्रमधीत्य ऋषिप्रार्थनया (२) तान् प्रति धर्म-अर्थ-काम-मोक्ष-भक्तिरूपपञ्चखण्डयुक्तां नारदमुखश्रुतां शाण्डिल्यसंहितामुक्त्वा कौण्डिन्यमृषिभ्य उपदेष्टार प्रदर्श्य ब्रह्मशृङ्गमगादिति (३)।

अत्रास्याः संहितायाः पाञ्चरात्रान्तर्गतत्वेन सामान्यतः पाञ्चरात्रशास्त्रीयसिद्धान्तप्रदर्शनानन्तरमेतत्संहिताप्रतिपादिताः सिद्धान्ताः प्रदर्श्यन्ते, येन पाठकानामुभयोर्विशेषज्ञानं सुलभं भवेदिति।

तत्र सामान्यतः प्रायः पाञ्चरात्रमते चिदचिदीश्वरभेदेन भोक्तृभोग्यनियामकभेदेन वा जगति व्यवस्थितास्त्रयः पदार्थाः। तत्रेश्वरो नियामकः। जीवो भोक्ता चिद्रूपः। दृश्यं भोग्यमचित्। अस्य जगतः कर्ता तथोपादानकारणमीश्वरोऽस्ति। स च सकलकल्याणगुणसम्पन्नः परमकारुणिको भक्तवत्सलो ब्रह्मस्वरूपो जीवनियन्ता पुरुषोत्तमवासुदेवशब्दवाच्य उपासकानां योग्यतानुसारं फलदानाय स्वलीलया-अर्चा-विभव-व्यूह-सूक्ष्म-अन्तर्यामीति पञ्चस्वरूपेणावतरति। प्रतिमादि देवतास्वरूपमर्चारूपम्। रामादयोऽवतारा विभवसंज्ञकाः। वासुदेवः (परं ब्रह्म), ततः सङ्कर्षणः (जीवः), ततः प्रद्युम्नः (मनः), ततोऽनिरुद्धः (अहङ्कारः) प्रादुर्भवत्येवं वासुदेवस्य चतुर्विधो व्यूहोऽस्ति। सूक्ष्मं नाम सम्पूर्णं षड्गुणं परब्रह्मैव। सर्वेषां जीवानामन्तः स्थित्वा प्रेरकोऽन्तर्यामीत्युच्यते। यथाक्रमं पञ्चस्वरूपाणामुपासनानामनन्तरं परं स्थितानां पञ्चविधोपासनानां स्वीकारः कर्तव्यः।

---

(१) शाण्डिल्यसं० अं० १ अ०६ श्लोकः ३२-८१।

(२) शाण्डिल्यसंहितायां प्रथमांशे प्रथमाध्याये श्लोकाः १-७

(३) शां०सं० अं०४अ१६श्लो०२१

ता उपासनाः-अभिगमन-उपादान-इज्या-स्वाध्याय-योगरूपाः। तत्राभिगमनं प्रातर्भगवन्मन्त्रस्तुतिनमस्कारादिकम्। तदनन्तरं पूजार्थं पुष्पादिसंपादनमुपादानम्। ततः पूजनमिज्या। ततो भगवच्छास्त्रतदनुगुणपुराणागमश्रवणचिन्तनादिकं स्वाध्यायः। ततः सायंसन्ध्याया अनन्तरं भगवति चित्तसमाधानं योगः। एवं प्रकारेण पञ्चविधोपासनानामनन्तरं विज्ञानोत्पत्त्या बाह्यविषयासक्तिनिवृत्तिः, ततो वासुदेवः स्वभक्तं स्वस्थाने नयति। सर्वकर्तृत्वव्यतिरिक्ताः परमात्मनः सर्वे गुणाः तस्मिन् प्रादुर्भवन्ति, न तस्य पुनरावृत्तिः।

अथ शाण्डिल्यसंहितायाः सामान्यतस्तत्वसंग्रहः। पुरुषोत्तमहर्यादिपदवाच्यो नारायण एक एवास्ति। स च निर्गुणो निराश्रयो निर्विकारो निजानन्दपूर्णोऽस्ति। जीवास्तदंशाः। पूर्णानन्दैकविग्रहोऽपि स रन्तुमनसा लीलाशक्तिमुत्पादितवान्। ततोऽसौ गोकुलादिस्थानेषु दिव्येषु सच्चिदानन्दमन्दिरे द्विधा भूत्वा पुंभाव-लीलादि आश्रितो लीलां करोति। स एव वासुदेव-सङ्कर्षण-प्रद्युम्न-अनिरुद्धरूपेण विराजते। तस्य नित्यविग्रहा अपि सर्वदा क्रीडामहोत्सवै रमन्ते। विष्णवादयस्तस्य स्वयंसिद्धाः कलाभूताः। स च पुरुषोत्तमः विष्णवादिद्वारा सकलं विश्वमुत्पाद्य सम्पूर्णं तद् व्याप्तवान्। स चार्चादिरूपेण मूर्तिप्रभृतिष्वस्ति। हरिप्राप्तये वैष्णवं गुरुं कृत्वा ततो दीक्षां स्वीकृत्य पञ्चधा शुद्धिं संपाद्य दीक्षोक्तवर्त्मना सकलं तान्त्रिकपूजनं वैदिककर्माविरुद्धं प्रत्यहं नवधार्चाप्रकारेणानुष्ठाय नवधा भक्तिं च कृत्वा मनुजो निष्पापो भवति। तत्र पञ्चधा शुद्धिस्तु जन्मना-विद्यया-तपसा-हरिसेवया-सत्सङ्गेन च भवति। नवधार्चा तु-अर्चन मन्त्र-पठन-याग-योग-नामसंकीर्तन-सेवा-तच्चिह्नधारण-तदीयाराधनरूपा। एवं सर्वदा कुर्वन् योगेन तपसाचारैश्च विरक्तो भूत्वा तं ज्ञात्वा भक्त्या च तत्परो भवन् तं प्रविशति। अनन्यास्तत्परा भक्त्या तदात्मका भूत्वा शङ्खचक्रादिलाञ्छिताः सन्तो हरिपार्श्वस्था भवन्ति।

सात्विका भक्ताः सारूप्यसार्ष्टिसायुज्यभागिनः । राजसाः सालोक्यभागिनः । सारूप्यं श्रीवत्सकौस्तुभादिरहितं शङ्खचक्राद्युक्तं भवति । सार्ष्टित्वं जगद्व्यापाररहितं भवति । पराभक्तिस्त्वीश्वरानुग्रहादेव भवति, तद्युक्ता निर्गुणात्मानः किञ्चिदपि मोक्षादिकं न वाञ्छन्ति । ते सर्वानन्दानुभूतिकारणमेकत्वं प्राप्नुवन्ति । तेषां चैतन्यरूपिण्यां सर्वानन्दमय्यां परमात्मनो नित्यलीलायां प्रवेशोऽस्ति । ते दिव्येन्द्रियैर्दिव्यानन्दं सर्वदानुभवन्ति न तेषां पुनरावृत्तिर्भवतीति ।

अधुनायं प्रसक्तानुप्रसक्तो विचारो मनसि प्रादुर्भवति यद्यज्ञादिनिरूपणपराद्दग्वेदादेः कथं भक्तिसंप्रदायः सर्वथा भिन्नः प्रवृत्त इति । यद्यपि ऋग्वेदादिषु बहुषु स्थलेषु मन्त्रद्रष्टृणामृषीणां वृत्तिर्देवतास्तुतिप्रसङ्गे सर्वथा बाह्यविषयपरित्यागपूर्वकप्रार्थनाविषयदेवतापरा जाता स्यादिति निर्णेतुं शक्यते ( १ ) । परन्त्वधुना भक्तिविषयस्य यादृशं स्वरूपं सुविशालं दरीश्यते शास्त्रेषु तादृशं नोपलभ्यते । यद्यपि ऋग्वेदस्य केचन मन्त्रा नवविधायाः श्रवणादिभक्तेर्बोधकाः सन्तीति प्रदर्श्यते ग्रन्थकारैः ( २ ) । परन्तु तदुभयवादिसंमतं नैव भवति । भारतागमग्रन्थाद्यवलोकने तु सामवेदेन ( ३ )

---

( १ ) ऋग्वेदसंहितायाः १-१६४,३३,८६,१० एतानि स्थलानि द्रष्टव्यानि ।

( २ ) अस्मिन्विषये 'भगवन्नामकौमुदी' 'भगवन्नाममाहात्म्यसंग्रह' प्रभृतयो ग्रन्था द्रष्टव्याः । विशेषतो 'भक्तिः प्रमेया श्रुतिभ्यः' इतिशाण्डिल्यसूत्रीयश्रीनारायणतीर्थरचितभक्तिचन्द्रिका द्रष्टव्या ।

( ३ ) समुपोढेष्वनीकेषु कुरुपाण्डवयोर्मृधे ।
अर्जुने विमनस्के च गीता भगवता स्वयम् ॥
... ......... ..... ..........
गहनो ह्येष धर्मो वै दुर्विज्ञेयोऽकृतात्मभिः ।
संमितः सामवेदेन पुरैवादियुगे कृतः ॥ ( भा०शां० अ०३४८ )
महर्षिमिश्च संप्राप्तः सामवेदान्तगं द्विजम् ।
ज्येष्ठं नामाभिविख्यातं ज्येष्ठसामव्रतो हरिः ॥ ( भा०शां०अ०३४८ )
प्रणिपत्य मुदा देवः सामगानादतोषयत् ।
जगतो हि समुद्धर्तुं संप्रदायस्य लब्धये ॥ ( शां०सं०अ१अ०५ )
कदाचिच्छ्रुतयः साम्नां सिद्धाः कीर्तनभक्तितः ।
मदनुग्रहमायाता एवं भूतं समीक्ष्य ताः ॥ ( शां०सं०अ०१अ०६ )

यजुर्वेदीयकण्वशाखया च (१) भक्तेः सम्बन्धोऽस्तीति ज्ञायते। स कथं संजात इति विचारकरणे कदाचिद्भक्तेरङ्ग-मेकं कीर्तनं गानप्रधानमस्ति, सामवेदपाठस्य गानयुक्ततया सामवे-दगानात्स्तोतव्यदेवतायां छन्दोगानामृषीणां चित्तस्य नितरां स्थित्या सामवेदात्कीर्तनभक्तिः साध्यरूपपरभक्त्या श्रवणाद्यन्यसा-धनादिना च सह संसिद्धा स्यादिति। कण्वशाखान्तर्गतोऽयं पाञ्चरा-त्रमूलभूत एकायनवेदः (२)। भक्तिशास्त्रस्य कण्वशाखया सह सम्बन्धस्य कारणं तु कण्वशाखायां भक्तेर्मूलभूततत्त्वयुक्तानि भक्तानां चरित्राणि सूत्ररूपेणासन्निति ब्रह्मवैवर्तपुराणादितो ज्ञायते (३)। प्रकृतसंहितायां तु आथर्वण-तैत्तिरीय-बौधायन-ऋक् सामादि श्रुतिषु विष्णुप्रियपदार्थानां महिमास्तीति वर्णितम् (४)। एवञ्च ऋग्वेदा-दिषु संक्षेपरूपेण स्थितं तत्काले केषाञ्चिदृषीणामाचारविषयभूतं

---

(१) काण्वीं शाखामधीयानावौपगायनकौशिकौ।
प्रपत्तिशास्त्रनिष्णातौ स्वनिष्ठानिष्ठितावुभौ॥ (जया०सं०प०१)
शाण्डिल्यश्च भरद्वाजो मुनिर्मौञ्जायनस्तथा।
इमौ च पञ्च गोत्रस्था मुख्या काण्वीमुपाश्रिताः॥ इति (जयासं०प०१)

(२) नागेशकृतकण्वशाखामहिमसङ्ग्रहसंज्ञकग्रन्थे (मद्रासपुस्तकालयस्थे) वर्णितमस्ति। अत्र विषये जयासंहिताङ्ग्लभूमिका द्रष्टव्या।

(३) तत्र राधिकाया आख्यानं कण्वशाखायामस्तीति प्रतिपादितम्। (२-४८)

(४) तैत्तिरीया जगुश्चोर्ध्वपुण्ड्रं वै श्रौतभस्मना। (शां०सं०अं०३-७)
वर्णाश्रमाचारवता धार्या तुलसिमालिका।
शिखोपवीतवन्नित्या जगावाथर्वणश्रुतिः॥ (शां०अं०३-४)
पादोदकं हरेः पेयं पूजान्तेऽपि दिने दिने।
सर्वतीर्थसमं तद्धि प्राह बौधायनश्रुतिः॥ (शां०अं०३-८)
उरुक्रमस्य पादाब्जपाथो यो न पिबेन्नरः।
विष्णोर्लोकं स न व्रसेदिति ऋक् शाश्वती श्रुता॥ (शां०अं० ३-८)

भक्तितत्वमुत्तरोत्तरं विशदत्वं विस्तीर्णत्वं च प्राप्तं सदधुना सर्व-तत्वान्यतिशेते। अस्तु। अस्याः संहितायाः विषयसूच्यादिदर्शने-नात्रत्यपदार्थज्ञानं सुलभं भवेत्परन्त्ववश्यद्रष्टव्यानां ध्यातव्यानां च दार्शनिकपदानार्थामत्र संक्षेपतः सूचनं पाठकानामुपकारकं भवेत्। प्रथमांशे प्रथमद्वितीयाध्याययोर्जगतः प्रादुर्भावो विशदो वर्णितः। चतुर्थपञ्चमाध्याययोर्भक्तिसंप्रदाया अत्यन्तं विशदतया वर्णिताः। षष्ठाध्याये ललितया शाण्डिल्याय प्रोक्त आचरणीयाचारः प्रदर्शितः। सप्तमाध्याये निर्गुणभक्तेः प्रसङ्गतस्तदुपकारिपदार्थस्य च विशदं वर्णनमुपलभ्यते।

द्वितीयतृतीयचतुर्थाध्यायाः सर्वेऽप्याचारप्रतिपादका अवश्यं द्रष्टव्याः। तृतीयांशे प्रथमाध्यायो दार्शनिकविचारपरिपूरितः। चतुर्थांशस्य प्रथमोऽध्यायो जगदुत्पत्तिक्रमविषयेऽवश्यं द्रष्टव्यः। तथा चतुर्थांशस्य त्रयोदश-चतुर्दश-पञ्चदश-षोडशाध्याया युगपरिमाणादि-कलिकर्तव्याकर्तव्यधर्माधर्मादिक-भविष्यदाचार्यादि—शाण्डिल्यवर्ण-नादिकप्रतिपादकाः सन्ति। तृतीयांशस्य षष्ठाध्यायस्थो मुद्राधारणशा-स्त्रार्थस्तथा चतुर्थांशदशमाध्यायस्थो देवस्वग्रहणाग्रहणशास्त्रार्थोऽ-वश्यं द्रष्टव्यः। अस्तु।

शाण्डिल्यसंहितायाः लिखितायाः कलिवर्ज्यावर्ज्यप्रकरणस्य पत्रत्रयं तथा प्रथमांशप्रथमाध्यायस्य च पत्रत्रयं लिखितं कार्यवशाद्वि-न्दुरपत्तने गतवता मयैकस्य ब्राह्मणस्य गृहे जीर्णपुस्तकसंग्रहादधपः-तितेषु ग्रन्थपत्रेषु दृष्टं। सम्पूर्णपुस्तकान्वेषणे कृतप्रयत्नेनापि वैफल्य-मेवासादितम्। ततः काश्यामागत्य श्रीयुतपण्डितप्रवरपद्मनाभके-शरिमहोदयनिकटे पञ्चाशद्वर्षेतः पूर्वं मुम्बईनगरे ज्येष्ठाराम-मुकुन्देन जगदीश्वरशिलाप्रेसमुद्रितं तत्पुस्तकं दृष्टम्। तत्पुस्तकप्राप्त्यर्थं सर्वत्र पुस्तकापणे प्रयत्ने कृतेऽपि न प्राप्तिः संजाता। ततः प्रसङ्गवशान्महामहोपाध्यायैः काशिकराजकीय-

पाठशालाध्यक्षमहोदयैस्तत्पुस्तकं दृष्ट्वा पुस्तकस्यालौकिकत्वं प्राङ्मुद्रितस्यापि सर्वत्र प्रचाररराहित्यं दौर्लभ्यं च दृष्ट्वास्य संशोधनेऽनुमतिः प्रदत्ता। ततः श्रीयुतपण्डितपद्मनाभकेसरिमहोदयस्यैकं शिलाप्रेसमुद्रितं पुस्तकं स्वीकृत्य संशोधनाय प्रयत्नोऽनुष्ठितः। संशोधनसमय एकस्यैव प्रतिश्लोकमशुद्धिबहुलस्य पुस्तकस्य सहायेन कार्यं कर्तव्यमापतितमतोऽशुद्धयो बह्व्यः संजाताः, ताः शुद्धिपत्राधारेण संशोध्य पुस्तकं पठनीयमिति पाठकानां पुरतः सविनयं प्रार्थना।

संप्रति काशिकराजकीयसंस्कृतपाठशालाप्रधानाध्यक्षैरार्जवौदार्यविद्वत्तमत्वब्रह्मवर्चसादिसकलऋषिगुणगणभूषितैरस्माकं पूज्यतमैः प्रभुवरमहामहोपाध्यायश्रीगोपीनाथकविराजमहोदयैर्ग्रन्थस्यास्य संपादनार्थं प्रवर्त्य तत्र तत्रात्यन्तोपयोगिनोऽन्यत्र दुर्लभान् दार्शनिकविचारान्स्वीयानन्यसाधारणया प्रतिभया संप्रबोध्य बहूपकृतमिति तान् कैः शब्दैरभिनन्दामि। सर्वथा तेषामानृण्यं सम्पादयितुमसमर्थस्तेषां दययैवाहमेतत्कार्यं सम्पादयितुं समर्थो जात इति सर्वदास्थितसत्यहार्दभावनिवेदनमेव सुयोग्यमिति मन्ये। तथास्य ग्रन्थस्यादर्शरूपं पुस्तकं स्वकीयं दत्तवतां पण्डितवराणां पद्मनाभकेशरिमहोदयानामुपकारान् सधन्यवादं प्रकाश्य येषां कृपाकटाक्षेण विना पदात्पदमपि चलितुं न शक्नोति मानवस्तान्काशीपुरपालकान् श्री १०८ भैरवनाथान् प्रणम्य विद्यारसिका विद्वांसः सफलयन्तु मामकीनं परिश्रममिति निवेदयते—

विदुषामनुचरः—
अनन्तशास्त्री फडके
व्याकरणाचार्यो मीमांसातीर्थश्च।

गवर्नमेण्टसंस्कृतकालेज,
वैक्रमे १९९३मिते वर्षे चैत्रशुद्धदशम्याम्,
काशी।

## सूचना ।

भूमिकायामनवधानतः कानिचिदशुद्धस्थलान्यवशिष्टानि तानि कृपयाऽत्र प्रदर्शितपद्धत्या संशोध्य भूमिका पठनीयेति विज्ञपाठकानां पुरतो विज्ञप्तिः ।

| पृष्ठम् । | पंक्तिः । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ६ | १३ | नेनं | नेदं |
| ६ | १८ | लब्धेति | लब्धा |
| ६ | २१ | महिमा | महिमसं |
| ६ | २१ | लस्थ | लयस्थ |
| १० | १ | बेद | वेद |
| १० | २ | दरीदृश्य | दृश्य |
| ११ | १० | लपवे | प्लवे |
| १२ | ६ | सहि | संहि |
| १२ | ११ | योऽब्ध्वा | योऽलब्ध्वा |
| १३ | ५ | व्यासवाल्मि | वाल्मी |
| १३ | ६ | कृतृ | कर्तृ |
| १३ | ७ | वेदन | वेदेन |
| १४ | ३ | सम्यमि | सम्यगि |
| १४ | ५ | सङ्ख्या | सङ्ख्यया |
| १५ | ७ | निर्माणसमये | नोपनिपद्यम् |
| १५ | ६ | णितानि | णीतानि |
| १६ | १ | पञ्च | पाञ्च |
| १६ | २ | निति | क्षिति |
| १६ | २ | भ्यते | भ्यन्ते |

——*——

# शाण्डिल्यसंहिताविषय-सूचिका ।



---

❀ तृतीयांशः ❀ ।

## ❀ चतुर्थांशः। ❀

इति शाण्डिल्यसंहिताविषय-सूचिका।

---

* अत्र विषयसूच्यां विषयारम्भसूचकश्लोकाङ्कःसंस्थापितः। तदग्रिमाङ्कपर्यन्तं प्रायः स विषयस्तत्सम्बन्धी च प्रचल तीति ज्ञेयम्।

# अथ द्वितीयांशः ।

## तत्र प्रथमोऽध्यायः ।



श्रीमुनय ऊचः—

भगवन् भवता भक्तिः श्रीगोपालस्य कीर्तिता ।
निर्गुणा सगुणा चापि तदाचारं निरूपय ॥ १ ॥

शाण्डिल्य उवाच—

सदुर्लभा भगवतो भक्तिर्निश्रेयसरूपिणी ।
सुकरा शान्तिदा सिद्धा वाञ्छिता जगदीश्वरैः ॥ २ ॥
अष्टादशाक्षरो मन्त्रः श्रीगोपालस्य सम्मतः ।
जीवानां भजनानन्ददायकोऽसौ निरूपितः ॥ ३ ॥
त्रैवर्णिकाः कारुणिकास्त्रयीनीष्ठा जितेन्द्रियाः ।
विद्यया जन्मना शुद्धाः सात्विका येऽधिकारिणः ॥ ४ ॥
वेदवेदान्तविद्विप्रः स्वाचारनिरतः सुहृत् ।
अनन्यभक्त्या संसिद्धः कुलीनो वैष्णवो गुरुः ॥ ५ ॥
बहुतीर्थाभिषिक्तोऽपि बहुयज्ञेषु दीक्षितः ।
सहस्रशाखाध्यायी च न गुरुः स्यादवैष्णवः ॥ ६ ॥
न तत्वं योऽभिजानाति न भागवतशास्त्रवित् ।
न यत्र श्रद्धासम्पत्तिः स गुरुर्न भवेद्धरिः ॥ ७ ॥
न पारम्पर्यसंसिद्धा यस्य दीक्षास्ति वैष्णवी ।
न चास्य महिमासिद्धिः स गुरुः किं गुरुर्भवेत् ॥ ८ ॥
गुरुमूलमिदं शास्त्रं शास्त्रमूलाऽऽदिदेवताः ।
स संपरीक्ष्य कर्तव्यो यत्र श्रद्धा दृढा भवेत् ॥ ९ ॥

देशिके विकले कुर्यादुपदेशोऽस्य सन्निधौ ।
विदुषा वैष्णवेनापि ब्राह्मणेन नियोजितः ॥ १० ॥
स्नातः शुचिः शुद्धवासा निवर्तितनिजक्रियः ।
तीर्थक्षेत्रे तीर्थकाले वटपत्रविधानतः ॥ ११ ॥
भगवद्भक्तियुक्तेन ब्राह्मणेन कृतं तु यत् ।
तत्सर्वं अकृतं विद्यान्नान्यत्तत्तोषकारणम् ॥ १२ ॥
गर्भाधानादिसंस्कारैर्येषां मौञ्जी यथाविधि ।
तेषामत्राधिकारोऽस्ति यदि भक्तिर्हरौ दृढा ॥ १३ ॥
ऋतुशान्तिर्विधायादौ तत्र प्रजनने द्विजः ।
वैष्णवं चिन्तयेद्धाम दीक्षैषा गार्भिकी मनोः ॥ १४ ॥
पुंसवे चापि सीमन्ते मनुमष्टोत्तरं शतम् ।
जपेद्धुनेद्वा हविषा कृत्वा वैदिकसंस्कृतिम् ॥ १५ ॥
जातेऽपि जातकं कृत्वा मनुना ह्यभिषिच्य च ।
मधुपर्कं हरेर्देयं वैष्णवं भावयेच्च तम् ॥ १६ ॥
नाम्नि श्रौतं नाम कृत्वा हुत्वा मन्त्रेण पायसम् ।
वैष्णवैर्वैष्णवं नाम तेनात्ममनसी शुची ॥ १७ ॥
ततोऽस्य निष्क्रमं कार्यं शुभेऽह्नि गुरुमन्दिरे ।
गुरोस्तत्राऽभिमर्षेण प्रपत्तिस्तत्र सिद्ध्यति ॥ १८ ॥
प्रपत्तिमत्र मन्त्रैर्वा दिशेत्कर्णेऽस्य दक्षिणे ।
अर्पयेद्वैष्णवीं मालां तथैव चरणाऽमृतम् ॥ १९ ॥
एवं प्रपन्नतापन्ने नासुरं भावमापतेत् ।
श्रवणं कीर्तनं तत्र सततं तु प्रवर्तयेत् ॥ २० ॥
अथान्नप्राशनं तस्य हरेर्नैवेद्यशिष्टतः ।
तेनाऽस्य दैहिकी शुद्धिरिन्द्रियाणामथापरा ॥ २१ ॥
पाठयेद्वर्णमालां च वैष्णवं स्तोत्रमादितः ।
ततो मौञ्जी द्विजैः कार्या यथाम्नायविधानतः ॥ २२ ॥

आत्मार्पणं गुरावत्र वेदशास्त्रावलोकनम् ।
तेन सार्वात्मिकी शुद्धिः परा भक्तिर्दृढा हरेः ॥ २३ ॥
ब्रह्मचर्यव्रतं धार्यं गुरुशुश्रूषणं तथा ।
वसेद्गुरोर्निदेशेऽसौ वर्जयेच्च रजोगुणम् ॥ २४ ॥
मेखलाजिनदण्डानि कौपीनाच्छादनानि च ।
शिखोपवीतमालादि वैदिकैर्नियमैर्वहेत् ॥ २५ ॥
सायं प्रातर्हरेरर्चा वैष्णवैः सह सङ्गतिः ।
शृणुयाद्भक्तिशास्त्राणि हरिधामान्यसौ व्रजेत् ॥ २६ ॥
एवं गुरोरनुमतो लब्धविद्यामहोदयः ।
धारयेद् वैष्णवीं दीक्षां श्रीमद्गोपालवल्लभाम् ॥ २७ ॥
सुमुहुर्ते शुभे काले सुतीर्थे विष्णुसन्निधौ ।
लब्ध्वाऽनुग्रहमाचार्याद्वहेद्दीक्षां महामनोः ॥ २८ ॥
अथवा तु यदा शुद्धो भवेद्भक्तानुकम्पया ।
पूर्ववासनया पुंसस्तदा दीक्षापरिग्रहः ॥ २९ ॥
बहुजन्मविपाकैश्च श्रेयोभिर्विविधैरपि ।
सात्विकानां नृणां श्रद्धा मनौ स्याच्चरमे भवेत् ॥ ३० ॥
नानाराधितगोविन्दा नानाश्रितनिजक्रियाः ।
नातप्ततपसो लोके श्रद्धावन्तो मनाविह ॥ ३१ ॥
यदैव देवदेवस्य सदनुग्रहभाजनाः ।
अदग्धसुकृता विप्रास्तेऽत्र श्रद्धासमन्विताः ॥ ३२ ॥
पापात्मानो दुरात्मानस्तामसा निगमच्युताः ।
प्रीतिर्न तेषामत्रास्ति न देयस्तेषु सन्मनुः ॥ ३३ ॥
संसारबन्धविच्छित्यै स्वाराज्यावाप्तये नृणाम् ।
नानेन सदृशं किञ्चित्साधनं मम निश्चितम् ॥ ३४ ॥
अनेन दीक्षितो विप्रः सर्वदेवमयो हरिः ।
एकान्तभक्त्या सर्वेषां वन्दनीयः सदा गुरुः ॥ ३५ ॥

एतादृशो नास्य गोत्रे महिमा नास्य हीयते ।
नचास्यान्यत्र श्रद्धा स्यात्प्रसादात् परमात्मनः ॥ ३६ ॥
अधिकारस्य सिद्ध्यर्थं संस्कारादिविलोपजम् ।
द्वादशाब्दव्रतं कार्यं विदुषा निजशक्तितः ॥ ३७ ॥
स्नात्वा सितासिते तीर्थे गत्वा वाराणसीमपि ।
दृष्ट्वा नारायणं देवं विशुद्धोऽत्राधिकारभाक् ॥ ३८ ॥
मथुरां द्वारकां वापि पुष्करं नैमिषं तथा ।
काञ्चीमयोध्यां संस्पृश्य विशुद्धोऽत्राधिकारभाक् ॥ ३९ ॥
श्रीरङ्गं व्यङ्कटं धाम व्रजं गोवर्द्धनं गयाम् ।
पुरुषोत्तममानम्य विशुद्धोऽत्राधिकारभाक् ॥ ४० ॥
पुनःसंस्कारमासाद्य ग्रहं संपरिवर्त्य च ।
भाण्डवस्त्रादिकं त्यक्त्वा यथाशक्ति यथाविधि ॥ ४१ ॥
ज्ञात्वाऽऽचारं तथा शास्त्रं वैष्णवानुमतो द्विजः ।
बिभृयाद्वैष्णवीं दिक्षामच्छिन्ननियमं वहेत् ॥ ४२ ॥
दीक्षादिनं समासाद्य वैष्णवाश्रमवान् भवेत् ।
तेनाचारः प्रकर्तव्यो यदत्र विनिरूप्यते ॥ ४३ ॥

इति श्रीशाण्डिल्ये भक्तिशास्त्रे द्वितीयांशे दीक्षाप्रशंसाविधिनिरूपणं नाम प्रथमोऽध्यायः ॥ १ ॥

———o———

## अथ द्वितीयोऽध्यायः ।

शाण्डिल्य उवाच—

अथाचारं प्रवक्ष्यामि यदुक्तं पद्मजादिभिः ।
यमाह शङ्करो देवो यं वै पाराशरोऽब्रवीत् ॥ १ ॥
अनालसः सदोद्योगी दृढदेहो जितेन्द्रियः ।
व्रतवान् शास्त्रसम्पन्नः श्रद्धालुः कर्तुमर्हति ॥ २ ॥

पाकस्थानं जलस्थानं स्नानस्थानं हरेः पदम्।
स्वस्थानमशुचिस्थानं स्त्रीस्थानादि यथोदयम्॥ ३॥
करशुध्यर्थमेष्वेव पञ्चजाद्यैर्यदुच्यते।
दूरे मूत्रपुरीषादि गृहादुच्छिष्टमुत्सृजेत्॥ ४॥
एवंविधे गृहे स्थित्वा सर्ववस्तुसमन्विते।
सौवर्णै राजतैस्ताम्रैः पात्रैर्व्यवहरेत्परैः॥ ५॥
सौवर्णं क्षालनाच्छुद्धं राजतं मृद्विलेपनात्।
अम्लतापेन ताम्रस्य अन्येषां घर्षणादिभिः॥ ६॥
स्वपात्रं पाकपात्रं च भगवत्पात्रमेव यत्।
स्नानपात्रान्यपात्राणि मेलयेन्न कदाचन॥ ७॥
एवं वस्त्रेऽपि विज्ञेया शुद्धौ द्रव्येति भावयेत्।
नावशिष्टं भजेद्द्रव्यं पुरतोऽन्याभिमर्षणे॥ ८॥
पाकं देवेषु पानीयं शुचि गूढं समर्पयेत्।
प्रसादान्नमतो ग्राह्यं विभज्य द्विजवैष्णवान्॥ ९॥
प्राज्ञा द्विजाः प्रिया विष्णोर्वैष्णवास्ते विशेषतः।
अवैष्णवा अपि ह्येते पूज्या जातिप्रिया हरेः॥ १०॥
देहशुद्धिः सदा कार्या करशुद्धिर्विशेषतः।
यतो हि सकला शुद्धिः करशुद्धिमपेक्षते॥ ११॥
प्रत्यहं क्षालयेत्पात्रं धार्यं वस्त्रं च प्रत्यहम्।
पानीयं प्रत्यहं त्याज्यं सिद्धान्नमपि प्रत्यहम्॥ १२॥
वस्त्रपूतं व्यवहरेत्तोयं यामचतुष्टये।
घृतपक्वादिपक्वान्नं सङ्कटे त्रिदिनावधि॥ १३॥
एकेनान्नं फलं द्वाभ्यां त्रिभिः शाकं न दुष्यति।
वह्निना च जलेनापि लवणेन यथाक्रमम्॥ १४॥
पयसा पिण्डितं पिष्टं हविषा यदि पाचितम्।
तत्पक्वान्नं व्यवहरेच्छुचिरेव ग्रहान्तरे॥ १५॥

वंशपात्रभृतं द्रव्यं कम्बलापिहितं यदि ।
शूद्राहृतमपि ग्राह्यं प्रवासे सङ्कटे द्विजैः ॥ १६ ॥
नावैष्णवैः सह वसेद् न तैः संसर्गमाचरेत् ।
प्रसङ्गेषु हरिं ध्यायेत्स्नायात् कर्मणि मन्त्रतः ॥ १७ ॥
सवर्णाश्च सतीर्थाश्च समन्त्राश्च समाचराः ।
वैष्णवाः पावना ह्येते व्यवहारे परः परः ॥ १८ ॥
सवर्णो वैष्णवो वापि तीर्थमन्त्रपराङ्मुखः ।
यो न विद्याधिकारी स्यान्नान्यव्यवहृतौ क्वचित् ॥ १९ ॥
देशे पुण्यतमे चाढ्ये नीचासङ्कीर्णसज्जने ।
हरेरर्चाश्रिते वासोऽनूपे जाङ्गलके शुभः ॥ २० ॥
गुरवो माननीयाः स्युर्विद्यया तपसापि वा ।
सम्बधिनोऽपि सम्मान्या वयःसम्बन्धरूपतः ॥ २१ ॥
नामभिः प्रणमेद्विष्णो जायांसम्भावयेत्पदम् ।
गुरवः पादयोर्वन्द्याः कस्यादिभ्यः परे समाः ॥ २२ ॥
असमा नाममात्रेण सर्वे वा भगवत्प्रियाः ।
देहवर्णाऽभिमानानां वन्दना शास्त्रसम्मता ॥ २३ ॥
द्वादशाब्दं वसेद्यस्तु मद्यमांसादिवर्जितः ।
स्वगुरुं सम्प्रसन्नोऽसौ सच्छूद्रो व्यवहारभाक् ॥ २४ ॥
सेवार्थमसृजत् तं वै पद्भ्यां स पुरुषो हरिः ।
ततोऽस्य पादसेवैव वस्त्रपात्रादिमार्जनैः ॥ २५ ॥
शूद्राहृतेन नाचामेन्न पचेन्न पिबेदपः ।
न कट्या उर्द्धतः स्पर्शी नृस्पृश्योऽसौ शिरो विना ॥ २६ ॥
शूद्रा ह्यनुपनीताश्च परबालाः परावलाः ।
अज्ञानालिङ्गिनो व्रात्या वर्ज्या स्युः पापिनोऽधमाः ॥ २७ ॥
रजस्वलां प्रसूतां च नियुञ्जीत गृहान्तरे ।
रोगार्तो विच्युतो धर्मादुन्मत्तोऽपि समागतः ॥ २८ ॥

स्वकृता शुद्धिरुत्कृष्टा सवर्णैर्मध्यमा मता ।
सतीर्थमात्रैरधमा यतः परकृताऽकृता ॥ २९ ॥
व्यवहारे शुचिस्ताम्रं पात्रं तु द्विमुखं शुचिः ।
कम्बलं चापि कौशेयमाहतं राङ्कवादिकम् ॥ ३० ॥
सुवर्णं रजतं लोहं ताम्रं रीतिश्च कांस्यकम् ।
सीसकं जसदं चापि पूर्वं पूर्वं शुचिस्ततः ॥ ३१ ॥
यद्वत्तु राङ्कवं शाणं कम्बलं कृमिजं तथा ।
कार्पासमाहतं रक्तं वस्त्रं तेष्वशुचिः परम् ॥ ३२ ॥
मणिबन्धात्कूर्परान्तमस्पृष्टं चेत्करः शुचिः ।
गुल्फादधो शुची पादौ सस्कन्धं चापि शिरः शुचि ॥ ३३ ॥
नाधरोच्छिष्टके योज्यं स्वर्णं ताम्रं सुबुद्धिभिः ।
तत्र स्थितं तु पानीयं शुचि तीर्थाम्बुवद्भवेत् ॥ ३४ ॥
उपानद्भ्यां चरेन्मार्गे अमेध्यान्वर्जयन्नपि ।
स्नातश्चरेत् पादुकाभिर्गृहस्नातो न सञ्चरेत् ॥ ३५ ॥
मलप्राये पथि स्नातः सोपानत्कोऽम्बु चाहरेत् ।
पार्ष्णेरधः शुद्धशुष्कचर्मस्पर्शो न दोषकृत् ॥ ३६ ॥
सदोपवीतपुण्ड्राणि तुलसीकाष्ठजां स्रजम् ।
धारयेदुत्तरीयं च सदा बद्धशिखो भवेत् ॥ ३७ ॥
मौनमालम्ब्य कर्माणि कुर्याद्भक्तिसमन्वितः ।
अमौनिनो यतो ह्यस्य बिन्दवो दूषयन्ति तम् ॥ ३८ ॥
जायस्तु मौनमेव स्यादभावे मुखबन्धनम् ।
तद्वासो न स्पृशेद्धस्तात् न तत्स्पृष्टो हि दुष्यति ॥ ३९ ॥
न दधेत्कृत्रिमं वासो कार्पासं शीतभीर्भवेत् ।
स्वभावरक्तं यद्वासो यच्च पाकेन रञ्जितम् ॥ ४० ॥
नवरक्तं तु यद्वासस्तदरक्तवदेव हि ।
नीलीरक्तं सुरास्पृष्टं वस्त्रं पात्रं न शुद्धति ॥ ४१ ॥

वस्त्रे कौसुम्भरक्ते तु नीलीरागः स्त्रियाः शुचिः ।
शिरस्त्राणांशुकं धार्यं नोष्णीषं शुचि कर्मणि ॥ ४२ ॥
कञ्चुके मङ्गले धार्यं स्त्रीणां सर्वविधांशुकम् ।
स्वयं पाकं पचेच्छुद्धः स्वाहृतं च पिबेदपः ॥ ४३ ॥
स्वयं भगवतः कुर्यात्परिचर्यां जितेन्द्रियः ।
सजातीयैस्सदीक्षैश्च सदाचारैश्च पाचितम् ॥ ४४ ॥
भजेदन्नं गृहस्थस्तु स्वकीयैश्च सतीर्थकैः ।
शुचि धौतं तु यद्वासो अस्पृष्टं धारणे शुचि ॥ ४५ ॥
मलदिग्धं तथा स्निग्धं रजकेन विशुद्ध्यति ।
रजकक्षालितं वासो नवमक्षालितं शुचि ॥ ४६ ॥
दैवे पैत्र्ये न तच्छुद्धं यच्जीर्णं परिमार्जितम् ।
भूमिः प्रक्षेपतः शुद्धा उच्छिष्टा तु द्विलेपतः ॥ ४७ ॥
अमेध्ययुक्ता खननात् लेपो मृद्गोमयाम्बुभिः ।
अत्यमेध्या तु दाहेन गोचारैर्हवनादिभिः ॥ ४८ ॥
न शूद्रस्य वसेद्गेहे न शूद्रं वासयेद्गृहे ।
नाद्यात्परगृहे क्वापि प्राङ्गणे भोजयेत्परान् ॥ ४९ ॥
न जलानि पिबेत्प्राज्ञो हीनजातिजलाशयात् ।
न हीनादाहारेदम्बु कूपादेर्नापि पल्वलात् ॥ ५० ॥
असंस्कृतगृहारामौ वर्ज्यमाहुर्जलाशयम् ।
चिरन्तनमलाभे तु द्विजैर्व्यवहृतं भजेत् ॥ ५१ ॥
नान्त्यजेभ्यः स्मशानेभ्यः पतितेभ्यो वहेच्छुचिम् ।
यज्ञागाराच्छिवागारात् सभस्ममपि नाहरेत् ॥ ५२ ॥
दीपोच्छिष्टं स्पृशेन्नैव स्पृष्टे गन्धं व्यपोहयेत् ।
दशगोमयमृत्स्नाभिः शूद्रोच्छिष्टं समं हि तत् ॥ ५३ ॥
सुरालशुनमांसास्थिपुरीषादेः समीरणम् ।
आघ्रायोपवसेद् दूरात्स्नातोऽन्यत्र विशुद्ध्यति ॥ ५४ ॥

पावके दह्यमानानां गन्धे शुद्धिर्गरीयसी।
विज्ञातेऽशुचिसंस्पर्शे पाकयोग्यानि वर्जयेत्॥ ५५॥
हिक्काच्छिक्काजृम्भणेषु हरिं ध्यात्वाऽऽचमेद् बुधः।
खात्काराश्रुनिपाते च प्रक्षाल्याचम्य शुद्ध्यति॥ ५६॥
ऊर्ध्वेन्द्रियमलस्पर्शे अधोवायुविसर्जने।
मूत्रेऽपि कामक्रोधे च शुद्धिः स्नानेन क्षालनैः॥ ५७॥
पुरीषेऽन्यमलस्पर्शे शुद्धिस्नानं यथोदितम्।
प्रायश्चितेऽशुचिस्नाने तद्दिनं दैववर्जितम्॥ ५८॥
सूतके मृतके चापि ग्रासदोषस्तथार्तवे।
पूजनं च जपं सन्ध्यां नित्यं रुग्णोऽपि वर्जयेत्॥ ५९॥
सूतके तु जलं वर्ज्यं मृतके स्पर्शनं तथा।
आर्तवे दर्शनं वर्ज्यं सूत्याः प्रेताग्निदस्य च॥ ६०॥
पुरीषावकरोत्पन्नं वर्ज्यं शाकं फलं सुमम्।
तत्प्रसक्तगवां क्षीरं प्रयुञ्जेदग्निकृच्छकृत्॥ ६१॥
अज्ञातं शाकपुष्पान्नफलादीनि विवर्जयेत्।
किं वै शास्त्रे निषिद्धानि किमु युक्तानि चार्यकैः॥ ६२॥
हीनस्य नाधिरोहेत छायां मञ्चादिजामपि।
न देवे पातयेच्छायां तत्र स्नानापवासके॥ ६३॥
म्लेच्छदेशैकसंजातं मद्यमांसादियोगजम्।
आद्यमार्यग्रहं ग्राह्यं न ग्राह्यमपरं बुधैः॥ ६४॥
देवदीपश्च पर्यङ्कं मार्जनी नैव दुष्यति।
न स्पृशेत्तदनावश्ये देवशुद्धौ करौ मृजेत्॥ ६५॥
यावन्न नश्येद्यो दीपस्तावच्छुद्धो नवो भवेत्।
देवदीपं न युञ्जीत कार्यार्थमितरत्र च॥ ६६॥
मद्यमांसास्थिसंपर्के गात्रं पात्रं पटं तथा।
गोमयात्क्षालयेदच्छं त्यजेदन्यं च पाटयेत्॥ ६७॥

कटिमुक्तं तु कार्पासं कौशेयं भोजनोत्तरम् ।
श्मशानगमहर्घ्यं च पट्टं भवति चाशुचि ॥ ६८ ॥
अदग्धं चाप्यदिग्धं च कम्बलं तु सदा शुचि ।
कम्बलस्पर्शने शुद्धिस्तृतीयस्यर्षिसंमिता ॥ ६९ ॥
लोमजानि तु वासांसि न देवेभ्योऽपि योजयेत् ।
भोजनं च स्त्रियश्चापि निजेष्टार्णं निजागमम् ।
निजधर्मं सदा गोप्यं गुप्तं प्रियत्तमं हरेः ॥ ७० ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे द्वितीयांशे-
सामान्याचारनिरूपणं नाम द्वितीयोऽध्यायः ॥ २ ॥

—:o:—

## अथ तृतीयोऽध्यायः ।

गुरोर्नाम न गृह्णीयाद्धरेरस्य प्रियस्य च ।
पर्यायेण तदाख्येयं श्रीशब्दादिभिरर्हितम् ॥ १ ॥
श्रीमदार्य गुरुस्वामिन् कृपानाथ दयानिधे ।
श्रीमदाचार्य भो देव भगो श्रीमन्महाप्रभो ॥ २ ॥
चरणान्तैर्लिखेच्छब्दैर्वदेच्च वहुवाचकैः ।
न निन्दां तस्य श्रृणुयात्प्राणैःकण्ठगतैरपि ॥ ३ ॥
अविज्ञातानुवादैश्च न तिरस्कारमाचरेत् ।
न चास्यामङ्गलं ध्यायेदातपेऽपि नियोजितः ॥ ४ ॥
त्वंकारमस्य सत्कारं तिरस्कारोऽपि चार्हति ।
अपकारोऽपि दोषघ्नः स्वल्पविद्याघदर्पितम् ॥ ५ ॥
गुरुं विद्याद्धरिं साक्षाद्धरिं स्वात्मवदाचरेत् ।
प्रेम्णा परिचरेदेतौ यावज्जीवं स्वशक्तितः ॥ ६ ॥
गुरुपुत्रेषु दारेषु कन्यासु गुरुबन्धुषु ।
समभावेन वर्तेत मुख्योच्छिष्टं विना द्विजः ॥ ७ ॥
भाण्डावशिष्टमुच्छिष्टं स्पृष्टोच्छिष्टमनेकधा ।
पात्रोच्छिष्टं तु दासानां भोज्यं भवति सद्गुरोः ॥ ८ ॥

ताम्बूलचर्वितं देयं प्रियायै क्वचिदेव हि।
पात्रोच्छिष्टं महोच्छिष्टं मुख्योच्छिष्टं तु चर्वितम् ॥ ९ ॥
भाण्डोच्छिष्टं स्वकीयानां भक्तानां स्पर्शजं ह्यपि।
नाभक्तेभ्यो न भक्तेभ्य उच्छिष्टं देयमर्हति ॥ १० ॥
गुरुपुत्रान् गुरोः कुल्यान् मानयेद् गुरुसन्निधौ।
गुरोरभावे तेष्वेव सपर्या गुरुसम्मिता ॥ ११ ॥
हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कोऽपि हि।
जनानामुपकाराय गुरुरूपी जनार्दनः ॥ १२ ॥
घटिकैकं गुरोर्ध्यानं गुरुदर्शनमाचरेत्।
न चासंपूज्य भुञ्जीत मरणाभिमुखोऽपि तम् ॥ १३ ॥
मृत्युकाले गुरोर्ध्यानं गुरुदर्शनमाचरेत्।
तेन संबोधितो मर्त्यो यात्येव हरिमन्दिरम् ॥ १४ ॥
गुरोरग्रेण नाश्नतः नाप्रणम्य विशेत्पुरः।
न हास्यं कुकृतिं कुर्याद्धरिवन्मानयेच्च तम् ॥ १५ ॥
गुरुणा चादृतं ध्यातं मतं स्पृष्टं च मानयेत्।
स्वयोग्यतामिहालोक्य पूजयेद् गुरुपादुकाम् ॥ १६ ॥
स्वधर्माचरणं भक्त्या विधर्मात्तु निवर्तनम्।
अनाग्रहो लौकिकेषु शिक्षैषा परमा हरेः ॥ १७ ॥
पूजा प्रवाहतीर्थेषु भक्तिशास्त्रैकतत्परः।
हरिप्रेमा रहोवासी मुच्यते विश्वतो भयात् ॥ १८ ॥
इन्द्रियेषु प्रसक्त्या च स्वधर्मपरिवर्ज्जनात्।
अभक्तानां प्रसङ्गेन हरिरस्मादुदासते ॥ १९ ॥
हरिर्भक्तपराधीनः प्रसीदति प्रयोजितः।
दोषेषु न गतिस्तस्माद्दोषान् संपरिवर्ज्जयेत् ॥ २० ॥
शक्तेन ज्ञानतो भक्त्या विकृतो दोष उच्यते।
अपराधमनज्ञातं स्खलितं समुदाहृतम् ॥ २१ ॥

धर्मशास्त्रानुकूल्येन भक्तिशास्त्रं निरर्गलम् ।
हरिभक्तिविरोधि यन्न तत् सुकृतमुच्यते ॥ २२ ॥
धर्मार्थकाममोक्षाणां धर्मः कारणतां गतः ।
सहायो हरिभक्तानां हरिप्रीत्यै तमाचरेत् ॥ २३ ॥
निःसाधनानामप्येषा समुद्धारकृते कृता ।
साधनानामिहाकाङ्क्षा व्यवहारार्थमेव हि ॥ २४ ॥
क्षालनं तु सदैव स्यात् स्नानेनैव विशुद्ध्यति ।
मलस्नानं गृहे कुर्यात्तप्तोदकपरोदकैः ॥ २५ ॥
तीर्थे शुद्धिः स्वयं प्रोक्ता धाराशुद्धिर्गृहे मता ।
न स्पृशेदशुचि पात्रं नोच्छिष्टं पात्रमाचरेत् ॥ २६ ॥
नाक्षालिते न्यसेत्पात्रं नास्थाने नापि दूषिते ।
निषिद्धभाजने साक्षात् क्षिपेन्नो मृष्टभाजनात् ॥ २७ ॥
नाशुचि च पिबेदम्बु नास्नातो भोजनं चरेत् ।
नाशुचिश्च न चास्नातो भगवन्मन्दिरं स्पृशेत् ॥ २८ ॥
पक्षान्महानसं शोध्यं पाकस्पृष्टं तु नित्यशः ।
जलस्नानं तृतीयेऽह्नि मासादन्यानि वाऽयनात् ॥ २९ ॥
त्र्यहान्नखनिकृत्तिः स्यात् केशानां सप्तमाहतः ।
यज्ञोपवीतं मासात्तु वाससी परतोऽयनात् ॥ ३० ॥
अज्ञातानामेनसां तु शुद्धिः कार्याऽयनेऽयने ।
शिखावर्ज्जं पञ्चकच्छैर्दिग्भिः प्रतिकृतैश्च वा ॥ ३१ ॥
न दीक्षता वपेच्छ्मश्रु न जीवत्पितृको गुरुः ।
सधवा केशवापञ्च निषिद्धेऽह्नि परित्यजेत् ॥ ३२ ॥
प्रायश्चित्ते वपेच्छ्मश्रु मृतौ यज्ञे समाचरेत् ।
वैधव्ये दशमे वापः स्त्रीणां शुद्धौ प्रकीर्तितः ॥ ३३ ॥
वीरसूरक्षता चापि गोविन्दैकप्रपन्नधीः ।
विधवापि वहेत्केशान् नित्यमेव व्रतस्थिता ॥ ३४ ॥

ताम्बूलं चापि गन्धे च मिष्टान्नं चोज्वलांशुकम्।
ग्राह्यं भगवदुच्छिष्टं विधवाभिर्व्रतस्थितैः ॥ ३५ ॥
गुणगानं भगवतो नृत्यं वाद्यं तदग्रतः।
दुष्यते सा न कुर्वाणा रागाक्ता पतिता भवेत् ॥ ३६ ॥
रक्तं वासो स्रजं पौष्पीं तथा सौभाग्यभूषणम्।
परिचर्यां भगवतः कुर्वाणापि न धारयेत् ॥ ३७ ॥
हरिं या पतिभावेन पुत्रभावेन वा भजेत्।
तस्यैवं वर्तनं प्रोक्तमिन्द्रियाणां गृहे सति ॥ ३८ ॥
कदिन्द्रियाणां शान्त्यर्थमेकभक्ता हविष्यभुक्।
कर्षयेद् देहमेवादौ व्रतैस्तीर्थैर्हरेर्जपैः ॥ ३९ ॥
ततो धर्मान्तरं कुर्यान्मनोदुष्टा न शुद्ध्यति।
कक्षामुखं शिरश्चैव दैवं क्षौरं तु मानुषम् ॥ ४१ ॥
मुखं शिरस्ततः कक्षा आसुरं तु शिरोमुखम्।
पूर्वाह्णिकं वा मध्याह्नं विधाय क्षौरमाचरेत् ॥ ४२ ॥
शुचिना नापि तेनैव भुक्ता नैव कदाचन।
क्षौरे त्वश्रुमलस्नानं तीर्थस्नानं तु संभवे ॥ ४३ ॥
मन्त्रस्नानं विधायैव प्राणायामशतैः शुचिः।
चूडां विना शिरोवापः कूर्चभ्रूभिर्विनानने ॥ ४४ ॥
कक्षोपस्थप्रकोष्ठानि वपनीयानि चक्षते।
वंशादिपात्रं पाकेन स्नेहेनामेध्यवस्तुतः ॥ ४५ ॥
दुष्यते काष्ठपाषाणैस्तक्षणाद्धर्षणाच्छुचिः।
अमेध्यलिप्तमशुचि तथोच्छिष्टेऽपि दुष्यति ॥ ४६ ॥
खड्गजं शङ्खजं शुक्तिभवं दन्तजमेव च।
शुद्धानि क्षालयेत्स्पर्शे पाकेनैतानि योजयेत् ॥ ४७ ॥
अमेध्येऽपि परित्याज्यं तथा चीनीयकाचजम्।
अस्पृष्टधातुस्तापेन शाणेनापि च संकरे ॥ ४८ ॥

कांस्यं परित्यजेदेव सीसकादि विलापयेत् ।
न केवलैर्मृदः पात्रैरुपपात्रैरथायसैः ॥ ४६ ॥
हरिपूजाभिहारं च शौचं वापि विवर्जयेत् ।
मार्जारमूषकादिभ्यः पाकं भुक्तं परित्यजेत् ॥ ५० ॥
स्पृष्टं तन्मात्रमेवेह राशौ देशादिकल्पना ।
काकादिदृष्टमेवं हि अन्यदृष्टं परित्यजेत् ॥ ५१ ॥
पाके पात्रे च वस्त्रे च षट्चतुर्द्विर्विधिस्पृशि ।
दृष्टशुद्धिस्तथादृष्टशुद्धिस्तु द्विविधा मता ॥ ५२ ॥
लेपग्लानिक्षयायाच्छा पुण्यायैवेतरा मता ।
अच्छा त्ववश्यमेव स्यादितरा निजशक्तितः ॥ ५३ ॥
एवमाचारमात्रेषु विचारो द्विविधो बुधैः ।
पारंपर्यमवेक्ष्यैव कार्यः शास्त्राऽनुरोधतः ॥ ५४ ॥

इति शाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे द्वितीयांशे आचारवर्णनं नाम तृतीयोऽध्यायः ॥ ३ ॥



## अथ चतुर्थोऽध्यायः ।

शाण्डिल्योवाच—

पीताम्बरं परिदधेद्दीक्षितो गन्धभूषणे ।
उत्सवे पूजनेऽवश्यं पुरश्चर्यादिकर्मणि ॥ १ ॥
मुखवासः सदा कार्यः परिचर्याविधौ हरेः ।
सावधानोऽनालसश्च सप्रेमा कुशलो भवेत् ॥ २ ॥
प्रपन्नं मानुषं दीनं हरेः शरणमादिशेत् ।
श्रावयेद्भक्तिशास्त्राणि पठेच्चापि विचारयेत् ॥ ३ ॥

परैर्वादातिवादैश्च पक्षपातं विवर्जयेत्।
पृष्टं साधुतया विज्ञैर्यथार्थं स्वमतं वदेत् ॥ ४ ॥
पूर्वाविद्धं चोपवसेद्व्रतं तद्विष्णुपञ्चकम्।
उत्सवं तत्र कुर्वीत लीलाभिनयसंभवम् ॥ ५ ॥
पञ्चपञ्चाशता विद्धां दशम्यैकादशीं त्यजेत्।
द्वितये द्वादशी वृद्धौ क्षये वा संशये परा ॥ ६ ॥
हरेर्जन्मदिनं चापि भानोरुदयदूषितम्।
नोपोष्यं नोत्सवे शस्तं उत्सवान्ते तु पारणम् ॥ ७ ॥
स्वजन्मदिवसं चापि गुरुजन्मदिनं तथा।
संस्कारदिवसं चापि उत्सवेऽतिथिसंमितम् ॥ ८ ॥
भक्तिशास्त्रोदितं शास्त्रे स्वीयमूर्तेर्महोत्सवम्।
शास्त्रोक्तमुत्सवं मूर्तेः पुण्यं पर्वोत्सवं भजेत् ॥ ९ ॥
महोत्सवेषु भेरीणां कल्लरीणां तथोत्सवे।
नित्यं मृदङ्गवीणानां गानं प्रियतमं हरेः ॥ १० ॥
गायेद्भक्तकृतैः पद्यैर्लीलाभिनयसंमतैः।
शृङ्गाराणि विचित्राणि नित्यनूत्नानि कारयेत् ॥ ११ ॥
यथा सुन्दरतां याति तथा प्रेम्णा विभावयेत्।
नानाव्यञ्जनपाकानि सिद्धान्नानि मृदूनि च ॥ १२ ॥
चोष्यलेह्याच्छभोज्यानि नित्यनूत्नानि चार्पयेत्।
एककालं द्विकालं वा त्रिकालं चापि पूजयेत् ॥ १३ ॥
न चाश्रद्धा न चालस्यं परिचर्याविधौ भजेत्।
राजोपचारभक्त्या वा निजलोकविभूतितः ॥ १४ ॥
सपर्या भावतः कार्या भावनासिद्धये बुधैः।
भावनात् व्यसनात्सिद्धौ सिद्धा लीलावपुर्हरेः ॥ १५ ॥
सेवना भावतः कार्या नन्दालयनिकुञ्जयोः।
स्वस्वामिभावतो भक्तैः मातृपुत्रप्रियेशवत् ॥ १६ ॥

हितस्यावरणं कार्यमहितस्य निवारणम् ।
सर्वेन्द्रियवियोगश्च कार्यो योगस्तथात्मनः ॥ १७ ॥
हृषीकैरत्यकारोऽस्य पारम्पर्येण भावयेत् ।
क्रियाशेषेण शेषाणामिन्द्रियाणां निवर्तयेत् ॥ १८ ॥
फलांशत्यागको हर्षादुपयोगो परस्य यः ।
न तस्य किञ्चित्कर्तव्यं स महात्मा सुदुर्लभः ॥ १९ ॥
चित्रमूर्तिरविज्ञानां मूर्तिर्विज्ञात्मसंपदाम् ।
साक्षात्तां परमेशानीं लीलाविग्रहगां भजेत् ॥ २० ॥
स्वकृता स्वोपकाराय कथं सेत्यधियां भ्रमः ।
यथौषधं यथाद्रौणि यथाराजं यथागमम् ॥ २१ ॥
मूर्तिस्तीर्थजलैः शोध्या मन्त्रैर्भावनयापि च ।
द्रव्यशुद्धिरियं ह्यत्र देवभावस्तु भक्तिजः ॥ २२ ॥
देवालये स्थलस्याशु शुद्धिः पुण्याय मान्त्रिकी ।
नात्र प्राणप्रतिष्ठादि व्यापकत्वाद्ध च जीवतः ॥ २३ ॥
जीवानामेव सा प्रोक्ता सर्वे जीवा हरेर्विना ।
ये हि चागमसंसिद्धा जीवास्ता मूर्तयो मताः ॥ २४ ॥
तासु चांशकलाव्यक्तिर्भक्त्या संजायते मितैः ।
गुरोः सेव्या भजेद्भक्त्या रम्यस्थानोपचारकैः ॥ २५ ॥
शुचिरेव ग्रहे स्वीये प्रासादे स्वागमं भवेत् ।
प्रसादे मूर्तेर्देवस्वं वर्ज्यं तीर्थं विनेतरत् ॥ २६ ॥
उपहारादिकैर्यत्र विशेषः कश्चिदिष्यते ।
महान्ति तानि धामानि पूजायाः समयस्य च ॥ २७ ॥
भावदृष्टं यथा भ्रष्टं निजाचाराय संमतम् ।
नाज्ञातदेवं प्रणमेत् नामन्त्रैर्नाद्विजार्चितम् ॥ २८ ॥
अवैदिकानां देवानां मद्यमांसभुजां तथा ।
दिवौकसां तु भजनं सुरापानसमं भवेत् ॥ २९ ॥
कुलदेवाः शुभे मान्या वैदिका नित्यकर्मणि ।
तीर्थेषु तीर्थदेवाश्च भूदेवा दैवपैतृके ॥ ३० ॥

नाप्रसङ्गाद्व्रजेद् देवान्प्रसक्तान् दानमानतः ।
सर्वान् संमानयेदत्र हरिभावनया स्वयम् ॥ ३१ ॥
पुण्यकालविशेषे च तथा पर्वसु चाह्निके ।
जपेच्छुचिरहो मन्त्रं भावयेत्तन्मयं हरेः ॥ ३२ ॥
एवं संवर्तनं यस्य दीक्षितस्य प्रवर्तते ।
भवेन्निर्गुणता सिद्धिः परा भक्तिर्हरेर्दृढा ॥ ३३ ॥

इति शाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे द्वितीयांशे विशेषाचारवर्णनं नाम चतुर्थोऽध्यायः ।

---

## अथ पञ्चमोऽध्यायः ।

अथाह्निकं प्रवक्ष्यामि यत्कृत्वाऽमृतमश्नुते ।
यदनादरणात्पुंसो निश्चिता नरके भृतिः ॥ १ ॥
यामिन्याः पश्चिमो यामो ब्राह्मी रात्रिरुदाहृता ।
यतो रात्रिस्त्रियामैव ब्रह्मकर्मनिरोधिनी ॥ २ ॥
ब्रम्हचारी पठेत्तत्र प्रक्षाल्यकरवन्मुखम् ।
स्नायाद्यतिर्विरक्तस्तु गृहस्थो ध्यानमाचरेत् ॥ ३ ॥
ब्राह्मे मुहूर्ते चोत्थाय आरोग्यं देवतोषकम् ।
तत्रालसस्य सर्वाः सुक्रियाः पापसमाकुलाः ॥ ४ ॥
ब्राह्मे मुहूर्ते निद्रा या पूर्वपुण्यहरी तु सा ।
तस्मादुत्थाय तत्राशु कीर्तयेन्मधुसूदनम् ॥ ५ ॥
प्रबुध्य दर्शनं कार्यं हरेर्वापि गुरोर्गवाम् ।
श्लोकयेच्च स्तवैः पद्यैर्गायेद्वा भक्तिनिर्मितैः ॥ ६ ॥

श्रुतिस्मृतिगणैर्गीतपूर्णानन्दैकविग्रहम् ।
श्रीगोपालहरेर्नाम भवदिच्छावशाऽनुगम् ॥ ७ ॥
देहयात्रां करिष्यामि पुण्यपापसमाकुलाम् ।
दासोऽयमिति ज्ञापित्वा मा च यात कृपानिधे ॥ ८ ॥
तदाज्ञां भावयन्नेवं दिनचर्यां समाचरेत् ।
शोभनं तदहर्विद्यात् तदेव सफलं जनुः ॥ ९ ॥
वाराहस्य प्रिये पत्नि जगतां धारिणि धरे ।
भगवद्भक्तिसिद्ध्यर्थं पादस्पर्शं क्षमस्व मे ॥ १० ॥
उत्थाय हस्तौ प्रक्षाल्य गण्डूषैर्मुखमार्जनम् ।
मृदा पादौ च प्रक्षाल्य परिवर्त्य च वाससी ॥ ११ ॥
हरिपादोदकमृदा तिलकं संविधाय च ।
कुशकम्बलपीठेषु पद्मकच्छासने स्थितः ॥ १२ ॥
वरमानन्दसम्पन्नं कृपानन्दैकविग्रहम् ।
गुरुं प्रसन्नमनसं दीक्षाकालस्थितं स्मरेत् ॥ १३ ॥
शान्तं पद्मासनस्थं शशिकरधवलं पीतवासोवसानम् ।
स्रङ्मृन्मुद्रोर्ध्वपुण्ड्रैर्जयति मणिमयैर्भूषणैः शुभ्रमौञ्ज्या ।
चूडालं सस्मितास्यं परमकरुणया भक्तिशास्त्रोपदेशे ।
कालिन्द्याः कुञ्जकेते हरिपरिचरणे भावयेद्भक्तवृन्दैः ॥१४॥
नमो भगवते तुभ्यं नमो भक्तानुकम्पिने ।
श्रीनन्दनन्दन हरे भजनानन्ददायिने ॥ १५ ॥
श्रीभागवतशास्त्राब्धेः सुधासारप्रवर्षिणे ।
प्रपन्नार्तिहृते तुभ्यं नित्यमेव नमो नमः ॥ १६ ॥
श्रीमदाचार्यवर्याय चिन्ताज्वरहराय ते ।
हरिसाञ्जनकर्त्रे च श्रीमहाप्रभवे नमः ॥ १७ ॥
लौकिकाशक्तिमनसं मामुद्धर कृपानिधे ।
नियोजय हरेर्दास्ये त्वद्दासोऽहं महाप्रभो ॥ १८ ॥

इति स्तुत्वा निजगुरुं तदीयानपि नामतः।
स्मरेन्नमेत्स्तुवेच्छक्त्या तत्तद्वृत्तानि संस्मरेत्॥ १६॥
अथ वृन्दावने रम्ये नवरत्नमयस्थले।
प्रफुल्लहृदयाम्भोजे स्मरेत् श्रीनन्दनन्दनम्॥ २०॥
अनन्तकोटिब्रह्माण्डघटनैकभ्रमोदरी।
मायां तमोपरि स्मरेत् ब्रह्मज्योतिः सनातनम्॥ २१॥
तदेव चाक्षरं ब्रह्म तदेव परमा गतिः।
तदेव निगमैर्गम्यं तदेवानन्दपौरुषम्॥ २२॥
तस्योपरि स्मरेच्चैत्यां चारुरत्नमयस्थलीम्।
चतुरस्रां चारुतरां चतुर्द्वारार्चितेश्वरैः॥ २३॥
योगशक्तिकृतैः पुंभिर्गुप्तां चेशैः समन्ततः।
अनौपम्यां रसघनां भक्तवृन्दैरभिष्टुताम्॥ २४॥
तत्र रत्नाश्मसंबद्धतटां कुञ्जैरलङ्कृताम्।
पद्माकरां विहङ्गानां कूजितां च कलस्वनैः॥ २५॥
प्रतिविन्त(?)कल्पद्रुवीचिमालासमाकुलाम्।
व्रजस्त्रीस्नानविभ्रष्टनवकुङ्कुमपङ्किलाम्॥ २६॥
सोपानश्रेणिसङ्कीर्णां दिव्यस्त्रीकेलिचञ्चलाम्।
नदद्भृङ्गाश्रिताम्भोजां मणिमुक्तैकवालुकाम्॥ २७॥
प्रासादारामसेतूनां मध्यतः शोभयोज्ज्वलाम्।
स्वादुस्वच्छातिच्छपानीयां विष्वक्कालिन्दिनीं स्मरेत्॥ २८॥
ततो विकुञ्जमालां च ध्यायेदुभयतो दिशम्।
स्फाटिकैः कृतप्राकारां मणिवप्रसमुन्नताम्॥ २६॥
वज्रमाणिक्यप्रासादमालाभिरभिशोभिताम्।
इन्द्रनीलगवाक्षैश्च मुक्तादामविलम्बिभिः॥ ३०॥
सिञ्जाणदीपतरुभिः कपाटैर्विद्रुमैः स्फुटाम्।
तत्र घण्टापथं ध्यायेद्गरुडाश्म ततोन्नतम्॥ ३१॥

परागवालुकाकीर्णं विद्रुमालम्बपञ्जरम् ।
मध्ये मध्ये चतुर्भद्रं रत्नसिंहासनं तथा ॥ ३२ ॥
तत्र काञ्चनच्छत्राणि वितानानि द्युमन्ति च ।
तस्यैवोभयतोऽहिरुक् कृता नीराहरी शुभा ॥ ३३ ॥
नानारेचकसङ्कीर्णह्रदनीगणसंवृता ।
फलपुष्पप्रवालाच्छन्नतद्द्रुमवनार्चिता ॥ ३४ ॥
प्रफुल्लाम्भोजसंमत्तनदद्भृङ्गालिशोभिता ।
चतुर्भद्रसहस्राणि निकुञ्जालिशतान्यपि ॥ ३५ ॥
सर्वेषामपि मध्येऽत्र प्राङ्गणं भास्वरं स्मरेत् ।
शृङ्गारमण्डलं पूर्वे याम्यामामोदमण्डलम् ॥ ३६ ॥
मण्डलं पश्चिमे भुक्तेरुदीच्यां केलिमण्डलम् ।
श्रीराममण्डलं मध्ये भक्तवृन्दैर्विभावितम् ॥ ३७ ॥
चन्द्रकान्तैः सूर्यकान्तैश्चिन्तारत्नैश्च कौस्तुभैः ।
सर्वरत्नैरनर्घश्रीसुषमावसितानि हि ॥ ३८ ॥
श्रुतिसिद्धवरस्त्रीणां यत्र वृन्दानि दक्षिणे ।
कोटिशारदराकेन्दुरोचिं भूषां वरस्रजम् ॥ ३९ ॥
निकुरं वाणिसिद्धानां वामे कल्हाररोचिषाम् ।
पश्चिमे भक्तिसिद्धानां फुल्लेन्दीवरभाजुषाम् ॥ ४० ॥
पूर्वतो नित्यसिद्धानां पद्मरागप्रभास्पृशाम् ।
सर्वाङ्गसुन्दरश्रीणां सर्वमण्डलसंभृताम् । ॥ ४१ ॥
सर्वसौभाग्यभाग्यानां सर्वानन्दैकसंपदाम् ।
स्वेच्छासिद्धविहाराणां यूथानि परिभावयेत् ॥ ४२ ॥
कस्मिंश्चिन्मण्डले वात्र कस्मिंश्चित्कुञ्जकेतने ।
ध्यायेत्स्वाभिमताकारं पूर्णानन्दातिसुन्दरम् ॥ ४३ ॥
अथ वा बाललीलास्थं ध्यायेन्नन्दालये हरिम् ।
श्रीगोकुलानन्दकरं यशोदानन्दलालितम् ॥ ४४ ॥

क्रीडितं बालकैः सार्द्धं चारयन्तं स्ववत्सकान् ।
प्राङ्गणे विहरन्तं च प्रेङ्खपर्यङ्कसंस्थितम् ॥ ४५ ॥
गोकुलं तु रमाक्रीडं दिव्यरत्ननिकेतनम् ।
गोगोपगोपिकावृन्दैः सुन्दरैः समलङ्कृतम् ॥ ४६ ॥
वेणुनादैर्दोहनाद्यै रम्भामन्थानसध्वनैः ।
गीतिभिर्गोपिकानां च ध्यायेत्परममङ्गलम् ॥ ४७ ॥
ब्रह्मघोषेण महता द्विजानां वादितं रुतैः ।
बन्दीजनानां सत्पद्यैः समुक्तपरमोदयम् ॥ ४८ ॥
चतुर्भद्रं पुरं ध्यायेद् बाह्योपवनशोभितम् ।
कालिन्दीमनुविस्तीर्णं हेमप्राकारमण्डितम् ॥ ४९ ॥
हर्म्यैः स्फटिकसंनद्धैर्मणिप्रस्तरसंचितम् ।
विचित्ररचनोद्दीप्तं गवाक्षालिविराजितम् ॥ ५० ॥
प्रासादैर्हर्म्यमालाभिर्घट्टैर्मणिमयैरपि ।
गोपुरैर्मण्डलद्वारैः पताकातोरणैः शुभैः ॥ ५१ ॥
भूषितं कृतनारीभिर्मण्डितैर्गोव्रजैरपि ।
तौर्यत्रिकेण महता पूजितैर्द्विजपुङ्गवैः ॥ ५२ ॥
मध्यतो नवनन्दानां प्रासादान् परिभावयेत् ।
तेषां समं ततो दिव्यबल्लवानां गृहाण्यपि ॥ ५३ ॥
मध्ये श्रीनन्दराजस्य चतुर्भद्रोऽतिशोभनम् ।
वज्राश्मघटितं चापि विशालप्रोन्नतोन्नतम् ॥ ५४ ॥
सत्यप्राङ्गणभूकृत्यं सप्तप्राकारभूषितम् ।
सर्वर्तुसुखदं सर्वसंपत्त्या सुमनोहरम् ॥ ५५ ॥
स्वगुणध्वजशोभाढ्यं श्रीदामाऽलङ्कृतं स्मरेत् ।
आधाय कलशं तस्य हरितेजोऽनुरञ्जितम् ॥ ५६ ॥
प्रथमे वप्रनिलये ब्रह्माद्या रक्षिणः स्वयम् ।
द्वितीये शङ्खचक्राद्यैर्विष्णोरेवादिभूतयः ॥ ५७ ॥

तृतीये गोपबालाश्च गावस्तु ये व्यवस्थिताः ।
पञ्चमे हरिभक्तास्तु षष्ठे तस्यात्मसेवकाः ॥ ५८ ॥
सप्तमे व्रजवल्लभ्यो रक्षणाय व्यस्थिताः ।
तास्तुदर्शनकालेऽस्य व्यवस्थापूर्वकं जनान् ॥ ५६ ॥
अनुगृह्णन्ति गृह्णन्ति दूरयन्ति रजोगुणम् ।
प्राघूर्णिकागारमाद्ये द्वितीये हविषां गृहम् ॥ ६० ॥
तृतीये तु सुवर्णानां महतां तु तुरीयके ।
ज्ञानिनां पञ्चमे प्रोक्तं षष्ठे तस्य सुधालिहाम् ॥ ६१ ॥
माथुरं गोपुरं चाद्य गोकुलाख्यं द्वितीयकम् ।
विरजाख्यं तृतीयं स्यात्तुर्यं सूर्येतिसंज्ञितम ॥ ६२ ॥
सिंहद्वारं पञ्चमे तु देवद्वारं ततः परम् ।
सप्तमं यामुनद्वारं निजद्वारं प्रकीर्तितम् ॥ ६३ ॥
आद्ये यज्ञभुजः पाला द्वितीये ज्ञानशालिनः ।
तृतीये रागसंयुक्ताः तुर्ये देवेश्वरा अपि ॥ ६४ ॥
पञ्चमे ज्ञानवैराग्यौ मुक्तिव्याध्रीसुतौ हरी ।
ऐश्वर्यवीर्यनामानौ षष्ठे गजपती स्थितौ ॥ ६५ ॥
यशोधरः श्रीधरश्च सप्तमे प्रतिहारकौ ।
शाकपाकान्नदुग्धाम्बुपात्रस्थानानि पृष्ठतः ॥ ६६ ॥
वामे भक्तप्रसादेन्दुक्रीड्यकार्यगृहाण्यपि ।
भाण्डमण्डननं देशशैय्यागाराणि दक्षिणे ॥ ६७ ॥
ताम्बूलसुमनोवस्त्रक्रीडागाराणि चोर्ध्वतः ।
गान्धर्वशाला तस्याग्रे वेदशाला तदग्रतः ॥ ६८ ॥
एवंविधं भक्तवरैर्ध्यायेत्स्थानं मनोहरम् ।
तत्र नन्दयशोदाभ्यां लालितं श्यामसुन्दरम् ॥ ६६ ॥
पञ्चवर्षपरानन्दरूपं क्रीडापरं स्मरेत् ।
गोबालकैर्बालकैश्च क्रीडन्तं मधुरस्मितम ॥ ७० ॥

फुल्लारविन्दवदनं यशोदानन्दनन्दनम्।
श्रीगोविन्दं कृपासिन्धुं श्रीमुकुन्दं हरिं नुमः॥ ७१॥
जय श्रीराधिकाकान्तकान्तेन्दीवरसुन्दर।
गोकुलेन्दुमुखीनाथ वृन्दारण्यपुरन्दर॥ ७२॥
जय कालिन्दिनीतीरनिकुञ्जकृतमन्दिर।
वृन्दारकेन्द्रसंपूज्य गिरीन्द्रधरणेश्वर॥ ७३॥
शरणागतसंत्राणगृहीतपरमव्रत।
कुरु मे मङ्गलं नाथ व्रजनाथ नमोऽस्तु ते॥ ७४॥
इत्येवं बहुधा स्तुत्वा हस्तौ प्रक्षाल्य वाग्यतः।
कुर्याद्देहक्रियां पश्चाच्छिरःप्रावृत्य वाससा॥ ७५॥
पानीयं दूरतः कृत्वा शुद्धे चाशौचपात्रके।
पृष्ठतो यज्ञसूत्रं च मालां कृत्वा बहिर्व्रजेत्॥ ७६॥
गृहान्तरेऽथवा गच्छेद्द् दुर्गं वा नगरोत्तमे।
मृत्तृणादि परिगृह्य मलोत्सर्गं यथाविधि॥ ७७॥
सोपानत्कोऽर्कशुचिस्थाने पिधाय वदनं चरेत्।
दूरं गत्वा पुरा लिङ्गे दद्याद्वै मृत्तिकात्रयम्॥ ७८॥
वामेन पाणिना लोष्टैर्गुदलेपं व्यपोहयेत्।
सप्त मृदा विशोध्या सा करं प्रक्षाल्य चोत्थितः॥ ७९॥
अस्पृश्य दक्षिणे पात्रं धृत्वा गत्वा कनीयसा।
प्रदत्तेन जलेनैव करप्रक्षालनं चरेत्॥ ८०॥
शुचि श्लक्ष्णां मृदं लब्ध्वा सूक्ष्मामामलकोन्मिताम्।
सप्तधा प्रथमं वामे शोधयेद्दत्तधारया॥ ८१॥
त्रिधा चोभौ पुनः शोध्यौ करौ पादौ ततः परम्।
त्रिधा त्रिधा पुनः पाणिं पात्रं चापि त्रिधा पुनः॥ ८२॥
पात्रेण चैकधा स्थानं दूरे संक्षालितं न्यसेत्।
संक्षाल्य वामं चाकोष्ठं सप्तधाथो करौ मृजेत्॥ ८३॥

कुर्याद्द्वादश गण्डूषान् करौ प्रक्षाल्य चास्यकम् ।
एका लिङ्गे करे तिस्रः पादे द्वे पञ्चधा द्वयोः ॥ ८४ ॥
आजङ्घात्क्षालयेन्मूत्रे पुरीषे कटिसंमितम् ।
कुर्यादाचमनं चापि संपिबेच्चरणामृतम् ॥ ८५ ॥
द्वादशाङ्गुलतो न्यूनं जम्वाम्रादिसमुद्भवम् ।
दन्तकाष्ठयुगं ग्राह्यं दन्तजिह्वाविशुद्धये ॥ ८६ ॥
एवं कुर्यान्मुखे पूर्वं क्षालितं चापरं करे ।
दन्तशुद्धिं पुरा कृत्वा जिह्वाशुद्धिं ततः परम् ॥ ८७ ॥
प्रक्षाल्य विसृजेत् फाले गण्डूषैः करशोधनात् ।
परत्र मुखशुद्धिः स्यात् षोडशैश्च मृदा करौ ॥ ८८ ॥
पादौ प्रक्षाल्य चाचम्य वीटकेनास्य शोधनम् ।
कुर्यादुद्गिरणं तस्य चोर्द्ध्वं वासान्तरं दधेत् ॥ ८९ ॥
सुगन्धतैलाभ्यङ्गं च शिरःप्रभृतिमाचरेत् ।
केशाकर्षणसंकारकरप्रक्षालनं मृदा ॥ ९० ॥
शीते च उदके कृत्वा मलस्नानं ततोऽन्यतः ।
गण्डूषान्तं विधायाथो द्विवासाः शुद्धकुम्भतः ॥ ९१ ॥
ध्यायन्तीर्थानि कालिन्दीं स्तुवन् स्नायाद्यथाविधि ।
पात्रं प्रक्षाल्य संदद्यात् वस्त्रे संपीड्य मार्जयेत् ॥ ९२ ॥
गच्छेत्प्रक्षाल्य पादौ च पन्थानं पादुके अपि ।
शुद्धे शुक्लाम्बरे दध्यात् कौशेये वापि पीतके ॥ ९३ ॥
परिधानीयके त्यक्त्वा करप्रक्षालनं चरेत् ।
विशुद्धोपकरणोऽसौ गुरुं ध्यायन् स्तुवन्नपि ॥ ९४ ॥
परिधानमुपादाय शिष्यो गच्छेज्जलगृहम् ।
विशोध्य ते दधेच्छुद्धे करौ प्रक्षाल्य चाव्रजेत् ॥ ९५ ॥
कुङ्कुमस्योर्द्ध्वपुण्ड्राणि ललाटादिषु द्वादश ।
ललाटे पद्ममेकं तु मन्त्रमुद्रा यथारुचि ॥ ९६ ॥

दक्षिणेनाम् द्वे द्वे दधेच्चक्रचतुष्टयम्।
द्वे द्वे पद्मे पार्श्वयोर्वै शङ्खमेकं च मध्यतः ॥ ९७ ॥
वामेऽपि बाहुमूले तु शङ्खानां तु चतुष्टयम्।
अधोऽर्ध्वे नाममुद्रे द्वे गदे चक्रं च पूर्ववत् ॥ ९८ ॥
मन्त्रमुद्रायुतान्यत्र षट्चक्राणि गलांसयोः।
दरमेकं गले मन्त्रमुद्राया हृदये ततः ॥ ९९ ॥
देशस्तनोर्ध्वतश्चक्रं त्रयं शङ्खद्वयं त्वधि।
पार्श्वयोः पद्मयुगं वामे चैव गदे मते ॥ १०० ॥
नाममुद्रायुता मन्त्रा मुद्रकानां चतुष्टम्।
उक्तानुक्तेषु पुण्ड्रेषु चक्रमेकैकमर्पयेत् ॥ १०१ ॥
गोपीचन्दनस्मृत्स्नाया लेपं शिरसि शेषकम्।
शेषं यत्कुङ्कुमस्यैव तच्छ्रीवत्सं तु वक्षतः ॥ १०२ ॥
चरणाम्बुमृदो लेपं नेत्रयोः करुणानिधेः।
मन्त्रमुद्रायुता षष्ठी मुद्रकाणां च षड्विधा ॥ १०३ ॥
न त्रिंशत्सुतत्त्वनां याभिः शुद्धिर्द्विधाधिका।
स्नानात्तु भौतिकी शुद्धिस्तिलकैर्दैवकर्मणोः ॥ १०४ ॥
अध्यात्मकी तु मुद्राभिर्जैविकी तीर्थपानतः।
मृदा तु मानसी प्रोक्ता पञ्चधा या च भौतिकी ॥ १०५ ॥
रूपात्मिका इयं प्रोक्ता नामतो नामकीर्तनात्।
एवं विशुद्धो विप्रोऽसौ वैदिकीमपि संचरेत् ॥ १०६ ॥
स्वशाखोक्तां ततः सन्ध्यां होमं कुर्याच्च तन्मनाः।
समयाननुरोधे तु यत्किञ्चित्समयान्तरे ॥ १०७ ॥
ऋषीणां षष्टिसाहस्री ब्रह्ममानससम्भुवी।
कालातिक्रतजां चर्यां या करोति हरेर्भुवि ॥ १०८ ॥

ये त्वालस्येन नास्तिक्यान्न कुर्वन्ति हरेर्मतम् ।
निग्रहानुग्रहे तेषां हरिरेव करिष्यति ॥ १०६ ॥
इति शाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे द्वितीयांशे परिचर्याध्यानवर्णनं नाम पञ्चमोऽध्यायः ॥ ५ ॥

——:o:——

## अथ षष्ठोऽध्यायः ।

अथ श्रीमन्दिरं गत्वा प्रणमेत्संस्तुवेद्धरिम् ।
द्वारमुद्घाट्य करयोः शुद्धिं च चूर्णखलैश्चरेत् ॥ १ ॥
मन्दिरात्पात्रसामग्रीं समादाय त्वरान्वितः ।
स्वस्वस्थाने निवेश्याथ प्रक्षाल्य मार्जयेत्स्थले ॥ २ ॥
ततः प्रक्षाल्य च करौ क्षालिते शुभपट्टके ।
कल्पाहारं दधेत्पक्वं सिद्धशाकं च दौग्धकम् ॥ ३ ॥
निवेश्य हस्तौ प्रक्षाल्य वासोऽलङ्कारमाल्यके ।
पीठान्तरे राजपीठमलङ्कुर्याच्च मन्दिरम् ॥ ४ ॥
ततः प्रक्षाल्य संप्रोच्य हस्तौ सन्ताप्य बोधयेत् ।
घण्टारवं कारयित्वा पत्न्या शिष्यैः सतीर्थकैः ॥ ५ ॥
नन्दालयं भावयित्वा निकुञ्जं स्वानुरूपतः ।
बालभावैः प्रौढभावैर्गरीयानुत्तरोत्तरम् ॥ ६ ॥
श्रीमन्नन्दमहाराजकुमार व्रजमङ्गल ।
श्रीयशोदाप्राणधन कोटिमन्मथसुन्दर ॥ ७ ॥
निजाननुगृह्य प्रभो जागृहि स्वापमुत्सृज ।
वत्सा वयस्या गोप्यस्त्वामाह्वयन्ते दिदृक्षवः ॥ ८ ॥
पूर्वोक्तयुक्त्या सम्बुद्धं नीत्वा पीठान्तरे हरिम् ।
मुखपाण्यादिभिः शुद्धं राज्यपीठे निवेशयेत् ॥ ९ ॥
तत्रानुकूलाभरणवस्त्रमाल्यैः प्रपूजयेत् ।

भृङ्गारकं नवं भृत्वा दधेद्वै वीटकद्वयम् ॥ १० ॥
मण्डले पट्टमानीय बालभोज्यं समर्पयेत्।
बहिरागत्य शृङ्गारपट्टं सम्यक् निरूपयेत् ॥ ११ ॥
शय्यां तदुपकरणं मन्दिरं चापि सज्जयेत्।
ततः करौ च प्रक्षाल्य तालेन बोधयन् विशेत् ॥ १२ ॥
आचमं शुद्धभृङ्गारात्कारयेत्तु पतद्गृहे।
ताम्बूलानि समर्प्यैव बहिर्नेपथ्यपट्टकम् ॥ १३ ॥
प्रसादं स्वीयसंस्थाने निधाय क्षालयेत्करौ।
करकेन च तत्पटटं मण्डलं तत्करौ मृजेत् ॥ १४ ॥
सम्बोध्य दर्शयेद्देवं गीतवाद्यैर्मनोहरैः।
नीराजयेत्ततो देवं घण्टावाद्यपुरःसरम् ॥ १५ ॥
विसर्ज्यारार्तिकं नत्वा करौ प्रक्षाल्य कंसके।
नवे सम्भृत्य देवेशं स्नानपीठे निवेशयेत् ॥ १६ ॥
तिरस्करिणिकां कृत्वा पाकानुज्ञां स्त्रियै वदेत्।
सा गत्वा पाकशालायां पात्रासादनमाचरेत् ॥ १७ ॥
पाकं कुर्याद्यथान्यायं शुद्धैः परिचरैस्तदा।
वाससा मुखमाच्छाद्य द्वारमाच्छाद्य यत्नतः ॥ १८ ॥
पक्वान्नं चाथ शाकानि दौग्धसिद्धान्नमापचेत्।
परस्परमसृष्टानि नेक्षेत्तानि परैः क्वचित् ॥ १९ ॥
पङ्क्त्यामशुचिभिर्नैव न दुर्गन्धिमलीमसैः।
दुर्भावेन न दुर्नाम्ना योजयेत्सा न कुत्रचित् ॥ २० ॥
माता पत्नी स्नुषा पुत्री भगिनी च पितृष्वसा।
ऊढा दक्षा च वृद्धा च शुध्दा श्रध्दावती परा ॥ २१ ॥
योजयेदथ वा शिष्यं सुतं सम्बन्धिनं परम्।
सवर्णं च सतीर्थ्यं च योजयेच्च समाचरम् ॥ २२ ॥
अथवा स्नानपीठस्य अधः स्थालीं निवेशयेत्।

हसन्तीं दूरतो नीत्वा कवोष्णं जलमाहरेत् ॥ २३ ॥
कृत्वाभ्यङ्गं स्नापयित्वा प्रोञ्छयेत्परवस्त्रतः ।
नवे पीताम्बरे दत्वा नयेच्छृङ्गारपीठके ॥ २४ ॥
वामाङ्गीं चापि संस्नाप्य कुर्याच्छृङ्गारमुत्तमम ।
तन्वंशुकं तथा नीवीं परधानीयकाम्बरैः ॥ २५ ॥
उष्णीषं च शिरस्त्राणं मुकुटं पिच्छमप्युत ।
कर्पासकञ्चुकं चाङ्गरक्षकं मल्लकच्छके ॥ २६ ॥
नृत्यकच्छं चोत्तरीयं निचोलं पट्टकादिकम् ।
हंसिकापीठपट्टं चोष्णीर्षकं लम्बिकादिकम् ॥ २७ ॥
मुखांशुकं चाम्बुवासो मृदु शाटी च पादुका ।
नित्यनूत्नैरलङ्कृत्य रत्नवेण्या च शोभयेत् ॥ २८ ॥
गले ग्रैवेयपदकहाराणि विविधानि च ।
वैजयन्तीं कौस्तुभं च श्रीवत्सं वक्षसोऽर्पयेत् ॥ २९ ॥
कुण्डले कर्णयुग्मे च मायूरे मकरे तथा ।
नासाभरणकं चापि चुबुकं तिलकं तिलम् ॥ ३० ॥
ललन्तिका चालकं च शिरोभूषणसन्नते ।
नखमुद्रोर्मिकापुष्पकाङ्गदं भुजभूषणम् ॥ ३१ ॥
मेखलाघण्टिकारत्नसिध्दं यज्ञोपसूत्रकम् ।
नखांशुकतुलाकोटिपुष्पमञ्जीरकादिकम् ॥ ३२ ॥
सौवर्णं मौक्तिकं रत्नकलितं चोपरत्नकैः ।
समर्पयेद्यथान्यायं यथर्तुदिनसम्भवात् ॥ ३३ ॥
वेणुवेत्रे चाञ्जनं च नेत्रालङ्कारमादितः ।
शृङ्गारमिह कुर्वीत गुञ्जामाल्यस्रजं ततः ॥ ३४ ॥
मुकुरं दर्शयेच्चातो वीटकं च निवेदयत् ।
सितामिष्टफले दद्याद् भृङ्गारं च समर्पयेत् ॥ ३५ ॥
राजपीठे रत्नपट्टे तूलिकासितप्रच्छदे ।

पार्श्वोच्छीर्षकपाश्चात्यालम्बोच्छीर्षकमण्डिते ॥ ३६ ॥
सौवर्णखण्डपीठे च उपपीठोपशोभिते ।
चतुःशाले सुवर्णांशुकसुतलिकयोन्नते ॥ ३७ ॥
क्रीडोपस्करसंयुक्ते चन्द्रांशुकविराजिते ।
चित्रप्रसरशोभाढ्ये ताम्बूलाम्बुस्रजान्विते ॥ ३८ ॥
निवेशयेध्दरिं तत्र स्वामिनीं वामभागतः ।
स्त्रीणां सौभाग्यभूषाभिर्मण्डनैरंशुकैरपि ॥ ३९ ॥
मण्डितां परमोदारां कुर्याच्च प्राणवल्लभाम् ।
अथ श्रीभोगमूर्तीनां स्नानं शृङ्गारमाचरेत् ॥ ४० ॥
श्रीगुरोः पादुकेऽभ्यज्य स्नाप्य वस्त्रावृते न्यसेत् ।
शालग्रामं तु पूर्वोक्तवर्त्मना पूजयेच्च वा ॥ ४१ ॥
ताम्रपत्रे कुङ्कुमेन कृत्वाब्जं तत्र विन्यसेत् ।
तुलसीमाल्यगन्धेन सम्पूज्य कलशाम्बुभिः ॥ ४२ ॥
पाद्यार्घ्याचमनीयैश्च पूजिताब्जे तु सेचयेत् ।
नारायणैः पौरुषैश्च स्वर्णधर्मानुवाकतः ॥ ४३ ॥
ततः सम्प्रोच्यान्यपीठे निधायाभ्यर्च्य गन्धतः ।
माल्यैः सूत्रैश्च वासोभिः पूजयेन्नित्यशो द्विजः ॥ ४४ ॥
गोवर्ध्दनशिलाभ्यर्च्य स्नानगन्धसुमादिभिः ।
ततस्तीर्थं समीकृत्वा कुर्यात्कुम्भान्तरे स्वयम् ॥ ४५ ॥
करौ प्रक्षाल्य पात्राणि स्वस्वस्थाने नयेदथ ।
शङ्खघण्टां पृथक्पीठे नीराजन्यां निवेशयेत् ॥ ४६ ॥
प्रक्षाल्य प्राङ्गणं प्रोच्छ्य हस्तौ प्रक्षाल्य चाव्रजेत् ।
पाकं विलोकयेत्सर्वं नैवेद्याय नियोजयेत् ॥ ४७ ॥
आगत्य पादौ प्रक्षाल्याचमनं च निवेदयेत् ।
ताम्बूलमपि धृत्वात्र ततो राजविभूतिभिः ॥ ४८ ॥
दर्शयेद्दर्शनार्हेभ्यः कुर्यात्तौर्यत्रिकं ततः ।

आरार्तिकं ततः कुर्याद् हस्तौ प्रक्षाल्य तं नयेत् ॥ ४६ ॥
कुर्याच्च मण्डलान्यत्र पीठानि क्षालितान्यपि ।
संभोज्य स्थालिकास्तत्र यथायोग्यं तथा पृथक् ॥ ५० ॥
निधाय हस्तौ संशोध्य कंशं भृत्वा नवं शुभम् ।
आचामयेद् भगवते दत्त्वैव तुलसीदलम् ॥ ५१ ॥
गायत्र्यास्यैव संप्रोक्ष्य स्वयं वै बहिराव्रजेत् ।
पिधाय द्वारमात्मीयजपं चाह्निकमाचरेत् ॥ ५२ ॥
प्रक्षाल्य हस्तौ पादौ च कृत्वा जयजयध्वनिम् ।
प्रविश्य मन्दिरे नाथं पुनराचमयेदथ ॥ ५३ ॥
उत्थापयेत्ततः सर्वं मण्डलादि विशोधयेत् ।
पात्रान्तरे च तत्कुर्यान्नयेत्स्थानान्तरेऽपि तत् ॥ ५४ ॥
करौ पादौ च प्रक्षाल्य भृङ्गारं नवमाहरेत् ।
वीटकं प्राशयेद्दद्यान्मालायुग्मं ततोऽर्पयेत् ॥ ५५ ॥
वेणुवेत्रे ततो दत्त्वा दर्शयेत्पूर्ववद्धरिम् ।
आदर्शादि निवेद्याथ शैय्यामासज्ज्य पादुकाम् ॥ ५६ ॥
माल्यं भृङ्गारकं भोज्यं सुगन्धादि यथोचितम् ।
ग्रीष्मे ग्रीष्महरं सर्वं शीते शीतहरं ददत् ॥ ५७ ॥
अलङ्कृत्यैव शय्यौको वहिरागत्य संस्तुवेत् ।
वेणुवेत्रे च माले चापहृत्य बहिराव्रजेत् ॥ ५८ ॥
पिधाय मन्दिरद्वारं साष्टाङ्गं प्रणिपत्य च ।
गन्धताम्बूलस्रङ्मात्रप्रसादं शिरसा वहन् ॥ ५९ ॥
व्रजेन्निजनिकेतं च भक्तिशास्त्रं ततः पठेत् ।
पूजयेद्विजसद्भक्तान् प्रसादान्नेन चाशयेत् ॥ ६० ॥
पञ्चग्रासादिकं कृत्वा गुरून्नत्वा स्वकैरशेत् ।
मण्डले पर्णसत्पात्रे प्रसादं परिवेश्य च ॥ ६१ ॥
घृतं दौग्धं द्रवं चान्यद् मृन्मये च नवे न्यसेत् ।

लवणार्द्रकनिम्बादि पृथक्पात्रे यथाविधि ॥ ६२ ॥
दक्षिणे जलपात्रं तु वामे तु परिवेषकम् ।
पत्नी स्नुषा स्वसा जेष्ठा प्रसूर्वा परिवेषिका ॥ ६३ ॥
न कनीयानातुरश्च कर्तुरन्योऽत्र संमतः ।
ततो भुञ्जीत स्वीयोक्तविधिनाप्यस्वलम्पटः ॥ ६४ ॥
आचम्य बहिरागत्य हस्तं संशोध्य चाननम् ।
कुर्याद्द्वा द्वादश गण्डूषान् सप्त धाव्य मृदा करौ ॥ ६५ ॥
द्विधा पादौ करौ चाथ मुखं चक्षूंषि नैकधा ।
करं प्रक्षाल्य चाचम्य मुखवासं ततो भजेत् ॥ ६६ ॥
एलाताम्बूलपूगादि नैकपूगं तु भक्षयेत् ।
एलादिसंयुतं त्वद्यात् तावत्यन्यं न ना स्पृशेत् ॥ ६७ ॥
क्षिप्तोच्छिष्टं बहिर्गेहात् दद्याद्वापि तदर्हते ।
अथवा निखनेद् भूमौ नोत्तमाधमयोर्ददेत् ॥ ६८ ॥
मृद्गोमयाम्बुलेपेन मण्डलं शोध्य पट्टकम् ।
पानपात्रे च संशोध्ये उच्छिष्टान्तो गतो भवेत् ॥ ६९ ॥
दक्षप्रकोष्ठे चाधाय पिबेद्वामेन पाणिना ।
दक्षिणेन पिबेत्पात्रं यदि वामेन पूरयेत् ॥ ७० ॥
सौवर्णं राजतं वापि उच्छिष्टं क्षालने शुचि ।
मार्तिकं च परित्यागात् नान्यमास्ये नियोजयेत् ॥ ७१ ॥
परम्पराऽपि(तः) संसर्गं स्पर्शबुद्धौ विचारयेत् ।
पात्रान्नमशुचि प्रोक्तं तावन्नान्यं स्पृशेत्क्वचित् ॥ ७२ ॥
स्पृष्टश्चोपविशेत्तत्र अनाचान्तो यथोदितम् ।
अकुर्वन् पात्रमुच्छिष्टं पिबेद्वारि शुचौ स्थितः ॥ ७३ ॥
ततोऽसौ भक्तिशास्त्राणि वाचयेद्वाभ्यसेद्वदेत् ।
विद्यागुरूणां शुश्रुषां चरेद्वार्तां स्वकां च वा ॥ ७४ ॥
अमङ्गलं तथाश्लीलं न पश्येन्न वदेत्स्पृशेत् ।

वस्त्रान्तरं परिदधेत् करौ प्रक्षालयेत्तदा ॥ ७५ ॥
उष्णीषं कञ्चुकार्द्धं च उत्तरीयं दधन् व्रजेत् ।
पादुकोपानहौ छत्रं वेत्रं चापि यथायथम् ॥ ७६ ॥
शिबिकां शकटं चाश्वं वाहं वा कल्पयेद् गजम् ।
रथं वाश्वरथं वापि खरोष्ट्राश्वतरादिना ॥ ७७ ॥
आगत्य च बहिर्वासो दूरीकृत्योर्णवाससा ।
करौ पादौ मुखं शोध्य तीर्थमाचम्य शुद्ध्यति ॥ ७८ ॥
द्विवासासौ सदा भूयात्तथा बद्धशिखः शुचिः ।
अभ्यसन् भगवन्नाम स्मरन् लीलां हरेरपि ॥ ७९ ॥
सायं बहिस्ततो गत्वा कृत्वा शौचं यथाविधि ।
स्नात्वा चादाय कुसुमं पात्राम्बुग्रहमाव्रजेत् ॥ ८० ॥
स्नात्वा शुक्लाम्बरे धृत्वा तिलकादि विधाय च ।
प्रबोध्य श्लोकयेद् देवं नवताम्बूलकम्बुना ॥ ८१ ॥
धृत्वा मिष्टफलादीनि राजभूत्या च दर्शयेत् ।
तिरस्करिणिकां दत्त्वा पक्वान्नानि निवेदयेत् ॥ ८२ ॥
नीराजयेत्ततो नाथं शृङ्गारं चावरोपयेत् ।
रोहिण्या चाशयेच्चाथ भव्यं दुग्धोदनादिकम् ॥ ८३ ॥
नीराज्य स्वापयेद्भक्त्या प्रेम्णा परिचरेदयम् ।
लीलां व्रजपतेः सर्वां भावयन्मनसो मुदे ॥ ८४ ॥
यस्त्वेषीवर्तमानानां(?) चित्तं रुद्धं हरौ विशेत् ।
शेषं पूर्वोक्तमेव स्यात्कुर्याच्च समयानुगम् ॥ ८५ ॥
न विधेर्नियमश्चात्र भवेत् प्रेमोद्गतौ नृणाम् ।
राजवद्बालवत्प्रेम्णा लीलाऽनुगुणतो हरेः ॥ ८६ ॥
सेवनं श्रद्धया कार्यमाजन्मन्यपि नित्यशः ।
उत्सवेषु च सर्वेषु नानापाकान्समर्पयेत ॥ ८७ ॥
तास्ता लीला च शृङ्गारं कारयेद्धरिसंमतः ।

सायं सन्ध्याहुती कृत्वा भोजनाचमनादिकम् ॥
हरिलीलां प्रगायेत भक्तैर्भगवतः कथाम् ॥ ८८ ॥

इति शाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे द्वितीयांशे भगवत्सेवा-
वर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥

——:o:——

## सप्तमोऽध्यायः ।

अथ स्त्रीशूद्रयोर्वक्ष्ये कर्तव्यं प्रत्यहं द्विजाः ।
प्रातः प्रबुध्य सा भर्तुः प्रणम्य शिरसा पुनः ॥ १ ॥
करौ पादौ च प्रक्षाल्य कीर्तयेद्भगवद्यशः ।
गृहं सम्मार्ज्य संलिप्य बाह्यकार्यं निवर्त्य च ॥ २ ॥
देहकृत्यं तथा शौचं पुरुषादर्धमाचरेत् ।
स्वीयाम्बुना ततः स्नात्वा हरिद्रातिलकं दधेत् ॥ ३ ॥
चरणाम्बुमृदो लिप्त्वा करो प्रक्षाल्य भाजने ।
भगवत्पात्रपानीयं तीर्थं गत्वा नयेज्जलम् ॥ ४ ॥
उपानद्भ्यां चरेन्मार्गे ततो मन्दिरशोधनम् ।
तत्पात्रशोधनं चाम्बु पाकपात्रादिशोधनम् ॥ ५ ॥
शाकपुष्पादि ताम्बूलगन्धसंपादनादिकम् ।
विधाय चात्मशुद्धेश्च पात्रमार्जनमाचरेत् ॥ ६ ॥
ततः प्रज्वालयेद्वह्निमम्बुसन्तापनं ततः ।
स्नानीयासादनं पश्चात् श्रौतसन्तापनं ततः ॥ ७ ॥

प्रसादाहरणं पश्चाद्‌ बालकानां च पोषणम् ।
गवां कार्यं ततः कार्यं अन्नकार्यं ततः परम् ॥ ८ ॥
पतिकार्यं ततः कुर्यात्पाककार्यं यथोचितम् ।
स्नानं शुद्धेस्ततः कार्यं हरेः कार्यं ततः परम् ॥ ९ ॥
ततो हरिं प्रणम्यैषा पाकं कुर्यान्मनोहरम् ।
ततः पात्राणि संशोध्य जपेन्मन्त्रं समाहिता ॥ १० ॥
ततः परिचरेत्कान्तं भिक्षुकान्भोजयेत्ततः ।
पोष्यानि पोषयेत्पश्चात् स्वीयं कान्तं च भोजयेत् ॥ ११ ॥
परिचर्य पतिं भुक्त्वा गृहकार्यं ततश्चरेत् ।
भूषिताथ हरेः कार्यं कुर्याद्वा श्रुणुयात्कथाम् ॥ १२ ॥
सायं स्नात्वा परिचरेद्धरिं पाकादिभिस्ततः ।
भोजयेद्भोजनीयान् स्वान् जपेच्च मनसा मनुम् ॥ १३ ॥
भुक्त्वा शयीत बालैः स्वैः सुप्तेष्वेषु पुनर्गृहे ।
स्नानशौचार्हपात्राणि स्थापयेन्मृतपटादिकम् ॥ १४ ॥
मण्डिता पुंसवे काले कामिता स्वपतिं भजेत् ।
प्रणम्य च पतिं चाशु समुत्थाय करौ मृजेत् ॥ १५ ॥
त्रिधा विशोध्य चाङ्गं स्वमाजङ्घं क्षालयेत्करौ ।
मुखस्य पादयोः शुद्धिं कृत्वा स्मृत्वा हरिं स्वपेत् ॥ १६ ॥
सदैव मण्डिता दक्षा शुद्धा मुक्तकरा सती ।
लज्जावती हरौ भक्ता स्निग्धा स्वीयेषु मिष्टवाक् ॥ १७ ॥
गुरुशुश्रूषणे दक्षा हरिसेवासु सादरा ।
स्वगृहे स्वप्रसूगेहे कामदोषपराङ्मुखी ॥ १८ ॥
सा हरेर्वल्लभा साक्षान्नान्यथाऽसौ वसीदति ।
व्रतानि हरितोषाणि पतिपुत्रादिदान्यपि ॥ १९ ॥
कुर्याद्‌ गृहे स्थिता नारी दानं तीर्थं हरेः प्रियम् ।
कन्यैवं दास्यमासाद्य हरे रूढा गुरोर्मता ॥ २० ॥

समर्पयन्निजात्मानं गृह्णीयाद्धरिसन्मनुम्।
पत्यादीनां तथौदास्ये स्वतन्त्राभ्यर्चयेद्धरिम् ॥ २१ ॥
प्रातिकूल्ये सुगुप्तयैव तत्र कष्टे परे गृहे।
चित्रे वा मनसा वापि श्रवणस्मरणादिभिः ॥ २२ ॥
एतत्तु सधवा कृत्यं विधवा सुव्रतस्थिता।
सेवेत बालभावेन शुचिर्दक्षा समाहिता ॥ २३ ॥
शुक्लाम्बरा गुरोर्लब्धदीक्षा निजगृहे हरेः।
सपर्यां पूर्वविधिना सुतादीनां प्रपोषणम् ॥ २४ ॥
तीर्थोपवासदानादिना सा वै हरिकीर्तनम्।
कुटुम्बवार्ता दरिद्रार्ता अलसोपकृतिं चरेत् ॥ २५ ॥
गुणानां श्रवणं कार्यं महतां च समादरः।
नाम्नां सुभजनं चापि सर्वसाधारणं त्विदम् ॥ २६ ॥
प्रातः सायं व्रजेद्देवमालयेऽभ्यर्चितं हरिम्।
दृष्ट्वा प्रणम्य संस्तुत्य नत्वा स्थित्वा व्रजेद् गृहम् ॥ २७ ॥
मन्दिरे देवदेवस्य मार्ज्जनं या करोति हि।
तीर्थाभिषेकजं पुण्यं विरजोभक्तिमश्नुते ॥ २८ ॥
लेपनैः क्षालनैरस्य अलङ्करणशोभनैः।
गङ्गादिस्नानजं पुण्यं हरिभक्तिं च विन्दति ॥ २९ ॥
शाकसंशोधने चास्य धान्यसंशोधने तथा।
ताम्बूलशोधने पुष्पशोधने वस्त्रशोधने ॥ ३० ॥
शुद्धान्तःकरणा भक्त्या कृच्छ्राणां फलमश्नुते।
पाकस्योपकृतौ कोटिपाकयज्ञफलं लभेत् ॥ ३१ ॥
कल्पने वस्त्रभूषाणां माल्यगन्धानुकल्पने।
अश्वमेधादि पुण्यं च शुद्धां भक्तिं परां लभेत् ॥ ३२ ॥
शुश्रूषणे गवामस्य भक्तानां भुवनस्य च।
भूमिदानसमं पुण्यं विरजःप्रेमभाक् भवेत् ॥ ३३ ॥

ग्रामारामतडागानां भुवश्चाजीवनस्य च।
अर्पणे विश्वकोटीनां दानस्य फलमाप्यते ॥ ३४ ॥
भूषाकाञ्चनवस्त्राणां धनधान्यचयस्य च।
दाने दिवोऽधिपत्यं च पात्रदाने भुवः पतिः ॥ ३५ ॥
दीपदाने भवेल्लोकं (?) जलदाने जलाधिपः।
शाकपुष्पेन्धनादीनां दाने देवोत्तमो भवेत् ॥ ३६ ॥
अदरिद्रः फलं दत्वा कुबेरो रजतार्पणात्।
प्रियार्पणे महेशः स्याद् ब्रह्मा सर्वार्पणाद्भवेत् ॥ ३७ ॥
मन्दिरस्यार्पणाच्छात्रः पूजानिर्वाहनादपि।
रमापतिर्भवेदग्रे गणाधीशोऽपि किङ्करः ॥ ३८ ॥
मायेश्वरी क्रीडनानामर्पणान्मुकुरस्य च।
ज्ञानी स्यात्स्तवनादस्य महर्षित्वं समश्नुते ॥ ३९ ॥
यत्किञ्चिदुपकृत्वास्य सारूप्यं व्यसनं (?) लभेत्।
यः पाठयेद्द्विजानस्य मन्दिरे भगवद्यशः ॥ ४० ॥
साम्राज्यलक्ष्म्या सम्पन्नो जायते भक्तवत्सलः।
वेदपारायणे पुण्यं प्राप्यते श्रौतकर्मणाम् ॥ ४१ ॥
पुराणस्येतिहासस्य पाठे वा स्मार्तकर्मणाम्।
यं यं क्रतुमधीयेत तस्यानन्तफलं लभेत् ॥ ४२ ॥
तौर्यत्रिकं च गन्धर्वं यः करोति हरेः पुरः।
तस्य देवार्चनफलं प्रीतिपात्रत्वमाप्यते ॥ ४३ ॥
स्वरताललयादीनामज्ञानेऽपि हरेर्यशः।
पुनाति सप्तविंशत्या पुरुषाणां परम्पराम् ॥ ४४ ॥
तक्रदानं तु भक्तानां पक्वान्नामान्नयोरपि।
प्रवर्त्य गोकुले वासं शाश्वतं प्राप्यते सुखम् ॥ ४५ ॥
विद्यासत्रं तरूणां त्वारोपणं वापिकादिकम्।
यः करोति हरेः स्थाने स वृन्दाविपिने चरेत् ॥ ४६ ॥

विप्राणां वरणैर्दानैर्ब्राह्मणाजीव्यकल्पनैः ।
पुत्रवित्तधनाढ्यश्च निरातङ्को हरौ भवेत् ॥ ४७ ॥
स्थाने वा मन्दिरे वापि देवानां जीर्णकोद्धृतिम् ।
यः कारयति तस्यापि वैकुण्ठे वास इष्यते ॥ ४८ ॥
अर्चासत्रप्रवृत्यास्य आलयस्य प्रतिष्ठया ।
सारूप्यं प्राप्यते भक्त्या जीर्णोद्धृत्या ततोऽधिकम् ॥ ४९ ॥
श्रीमद्भागवतस्यात्र शास्त्रस्य परिपाठनैः ।
कथासत्रप्रवृत्यात्र सालोक्यं सुखमक्षयम् ॥ ५० ॥
ततः परतरं पुण्यं वाञ्छितार्थप्रदायकम् ।
तस्मात्सर्वप्रयत्नेन तेष्वन्यतममाचरेत् ॥ ५१ ॥
यथा यथोपकुर्वन्ति कार्याणीष्टं तथा तथा ।
पुण्यानि भक्तयस्तेषां सिध्यन्ति च यथारुचि ॥ ५२ ॥
सेवनाद्भक्तिसिद्धिः स्याद्भक्त्या सर्वं प्रसिध्यति ।
स्त्रीणां पतिस्तथाऽशूद्रो जन्मना गुरुरिष्यते ॥ ५३ ॥
अस्वतन्त्रात्मनामेतदुक्तं कार्यं स्वशक्तितः ।
देवालयं समीक्ष्यैव नमेच्चाथ प्रविश्य च ॥ ५४ ॥
विनीतवेशो हि भवेत् शस्त्रदण्डादि वर्ज्जयेत् ।
यतयो व्रतिनो भूपाः स्वोपचिह्नं त्यजन्त्यमी ॥ ५५ ॥
शुचयः प्राणिनः काले प्रविशेयुः समा इव ।
दृष्ट्वा उपायनं कुर्याद्भावुका दैन्यमाश्रिताः ॥ ५६ ॥
कुर्यादुपबलिं भ्राम्यत्काञ्चनैराश्रितेऽर्पयेत् ।
तापसस्तवमात्रेण तोषयेद्द गुणिनो गुणैः ॥ ५७ ॥
प्रदक्षिणैः प्रणामैश्च तीर्थपानैश्च मानयेत् ।
प्रसादमस्य गृह्णीयात्सर्वैपृत्कृष्टजातितः ॥ ५८ ॥
सेवकेभ्यो न मौल्येन न निषेधेदयुक्तितः ।
प्रसादे वन्दनं कार्यं मूर्तौ चित्रे दले स्थले ॥ ५९ ॥

वृद्ध्यै वोपबलिः कार्य एवं वस्त्रस्रजादिषु ।
एवं गुरूणां संस्थाने माननं समुदाहृतम् ॥ ६० ॥
अशक्तः सेवने तस्य तीर्थधामादिदर्शनम् ।
कुर्यान्नातः परतरो धर्मः प्रोक्तो मनीषिभिः ॥ ६१ ॥
अर्चावतारधामादौ मानामानं न चिन्तयेत् ।
ताडने क्रोशने क्षेपे पापहानिं विचिन्तयेत् ॥ ६२ ॥
अथवा हरिनाम्नो वै सदा जापं प्रकल्पयेत् ।
रोमसङ्ख्यामितं नाम गृहीत्वा निर्भयो भवेत् ॥ ६३ ॥
सेवासक्ताः कथासक्ता नामासक्ता हरेर्नराः ।
कृतकृत्या मताः सर्वे नात्र कार्या विचारणा ॥ ६४ ॥
यथाशक्ति स्वधर्मेण घृणालुर्गुरुमाश्रितः ।
भजन् हरिं विमुक्तः स्यात् प्रेम्णा भक्तेषु शस्यते ॥ ६५ ॥

इति शाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे द्वितीयांशे स्त्रीशूद्र-
साधारणधर्मवर्णनं नाम सप्तमोऽध्यायः ॥ ७ ॥

—o—

## अष्टमोऽध्यायः ।

प्रवासे शौचमर्द्धं स्यात हरिं तु पिटके नयेत् ।
आमध्याह्नं परिचरेदेककालं यथायथम् ॥ १ ॥
आपन्नस्तु यथाशक्ति याममात्रं निवासयेत् ।
रोगार्तो वैष्णवैरन्यै सपर्यां कारयेद्धरेः ॥ २ ॥

मृताशौचे च पुष्पे च प्रसूतौ च व्रते दृढे।
महारोगे च विप्रेभ्यो वैष्णवेभ्यश्च कारयेत॥ ३॥
स्वयं तु मनसा कुर्यात्केवलाम्बुफलार्पणैः।
वैष्णवानामलाभे तु शुद्धं विप्रं नियोजयेत्॥ ४॥
न शैवं नैव शाक्तं तु पाषण्डं नान्यवर्णजम्।
शुद्ध्यन्ते शोधनं कुर्यात्तीर्थतोयामृतैरपि॥ ५॥
सहस्रमनुजापञ्च यथायोग्यं तु कारयेत्।
उपहारं हरेः कुर्याद्विप्रवैष्णवभोजनम्॥ ६॥
न वसेद् म्लेच्छदेशेषु न वसेद्बहुजातिषु।
सदा परगृहे नैव नातिदूरे गुरोरपि॥ ७॥
प्रवासे दर्शनं मासे गुरोर्वर्षेऽपि संभवात्।
गुरोः परं परं किञ्चित् नैव नान्यं च चिन्तयेत्॥ ८॥
हरिं प्रसादतः प्रीतिर्गुरोरेव गरीयसी।
श्रद्धा भक्तिर्भवेत्सिद्धा तत्सिद्धौ न विडम्बनम्॥ ९॥
ये परम्परया व्रात्यास्तेऽपि शूद्रसमाः स्मृताः।
स्वस्वर्णानुरूपं च तेषां कार्यं न वैदिकम्॥ १०॥
प्रायश्चित्तविधिं कृत्वा तेऽपि योग्या भवन्ति वै।
अन्यथा तु प्रपन्नाः स्युश्चित्रसेवनमिष्यते॥ ११॥
गुरोर्दत्तां हरेर्मूर्तिं गृहीत्वा गृहशुद्धितः।
फलमाल्याम्बुवस्त्राद्यैर्यथाशक्ति समर्पयेत्॥ १२॥
व्रजे वसन्ति ये भक्ताः ये विप्राः प्राणिनो नराः।
ते सर्वे माननीयाः स्युरङ्गीभूता हरेर्यतः॥ १३॥
व्रजे वसेद् व्रजरजो दुर्लभं तद्दिवौकसाम्।
मथुरामण्डलादन्यः प्रियो नास्ति हरेः क्वचित्॥ १४॥
श्रीमद्भागवतं शास्त्रं सदा पाठ्यं मुमुक्षुभिः।
व्रजे वासः सदा कार्यो गिरौ वृन्दावने च वा॥ १५॥

वृन्दावने गोकुले च श्रीमद्गोवर्धनाचले ।
हरेः प्रियतमे वास अन्यत्रापि यथारुचि ॥ १६ ॥
श्रीमद्भागवतं यैस्तु नाभ्यस्तं न श्रुतौ श्रुतम् ।
न पीतं यमुनावारि तेषां जन्म वृथा गतम् ॥ १७ ॥
वृन्दावनं न जुष्टं वै न च गोवर्धनाचलम् ।
न गोकुलं व्रजं वापि ते कथं हरिवल्लभाः ॥ १८ ॥
वृषभानोश्च नन्दस्य प्रियाणां मातुरेव च ।
सखीनां निवसेद् ग्रामे व्रजेशप्रीतिमान्भवेत् ॥ १६ ॥
संस्काराः पैतृके चापि शुद्धिर्नैमित्तिकं व्रतम् ।
सर्वं समाचरेदत्र सात्विकं हरिसम्मतः ॥ २० ॥
यथाकथंचिद्यत्किंचिन्मया भक्ताऽनुशासनम् ।
कृतं तेन निजाचार्यः श्रीकृष्णः प्रीयतां मम ॥ २१ ॥
इति संकल्पयेत्सर्वं कर्मणां शुद्धये द्विजः ।
नाम्नामुच्चारणं चापि सर्वकर्माङ्गमिष्यते ॥ २२ ॥
विरक्तो वा भवेदाशु गृहं त्यक्त्वा व्रती पुमान् ।
सत्तीर्थेषु व्रजे वापि कथासत्रेऽपि वा वसेत् ॥ २३ ॥
मितभिक्षाशनः शुद्धो गुरुशुश्रूषणे रतः ।
आलये परिचर्यां च स्वधर्ममपि यल्लघु ॥ २४ ॥
हतत्रपो विगतभीः प्रेमप्रसरविह्वलः ।
गायन् हरिगुणान्नित्यं चरेदविधिगोचरः ॥ २५ ॥
संन्यसेद्वा स्वधर्मेण शिखी दण्डी स्वसूत्रधृक् ।
तुलसीकाष्ठजां मालां पुण्ड्रमुद्राश्च धारयेत् ॥ २६ ॥
काषायाम्बरधृत् काष्ठपात्रो वेदान्ततत्परः ।
हरिं सर्वात्मभावेन भावयन् विचरेत्स गाम् ॥ २७ ॥
ब्राह्मणानां गृहे भिक्षां कुर्वन् भक्ताऽनुशिक्षणम् ।
भक्तिशास्त्रवितानं च कुर्वन् गायन् हरिं चरेत् ॥ २८ ॥

इत्येवं सर्वमाख्यातो वैष्णवाश्रमनिर्णयः।
एतस्मिन्निवसन्भक्तो हरेः प्रियतमो भवेत् ॥ २९ ॥
ब्राह्मणो ध्यापनाद्यैश्च क्षत्रियो रक्षया भुवः।
वैश्योऽपि वार्तया जीवेच्छिल्पाच्छुश्रूषया परः ॥ ३० ॥
नृपः स्वधर्ममास्थाय प्रजा सर्वाभिरक्षयेत्।
स्वे स्वे धर्मे वेदमार्गादत्यन्तमविरोधिनी ॥ ३१ ॥
विप्राणां कल्पयेद्वृत्तिं दुर्बलानां च भूपतिः।
सर्वेषामुपकाराय महारम्भान्विचारयेत् ॥ ३२ ॥
दीनेषु पितृवत् स्निग्धः कोपनो दुर्जनेष्वलम्।
दासवद्धरिभक्तेषु हरिसेवासु तत्परः ॥ ३३ ॥
प्रसादेषु प्रतिष्ठाप्य कुर्यादुपकृतिं तथा।
आजीव्यान्नर्पयेत्तत्र निबन्धानि च कारयेत् ॥ ३४ ॥
नित्यं हरिं परिचरेदुत्सवेषु विशेषतः।
व्यवहारं तु मध्याह्ने आर्तं पश्येत्सदैव हि ॥ ३५ ॥
राजानमाश्रितो धर्मः वेदावेदाश्च सज्जनाः।
नालस्यं निर्दयत्वं च कार्यं तेन च कर्हिचित् ॥ ३६ ॥
विषयाभिनिवेशेन दीनानां समुपेक्षया।
अनादराच्च विदुषां लोकान्नाशयते नृपः ॥ ३७ ॥
मन्वाद्युक्तं नृपैः कार्यं रागद्वेषविवर्जितैः।
चाटुतस्करदुर्वृत्तपाषण्डानां च निग्रहम् ॥ ३८ ॥
युतस्तेन जनोद्वेगो लोकानां मोहनं भवेत्।
ततः पाषण्डमार्गाणां निरोद्धुं सर्वथा चरेत् ॥ ३९ ॥
यस्य राष्ट्रे तु दीनानां न पतन्त्यस्रबिन्दवः।
स हरेः प्रियतामेति अन्यथोभयविच्युतः ॥ ४० ॥
वैष्णवस्तु स्वयं भूयात्कुर्याद्राष्ट्रं च वैष्णवम्।
वैष्णवास्तापसा विप्रास्ते च मान्याः सदैव हि ॥ ४१ ॥
प्रजानां प्रीतये राजा विद्वान् योगक्षेमानपि।

वैद्यान्पौराणिकान् स्मार्तानस्त्विनो गुणिनः परे ॥ ४२ ॥
सर्वे संरक्षणीया वै सेनावाहाश्च मन्त्रिणः ।
दुर्गाणि कोशं मित्राणि शस्त्रास्त्राणि यथायथम् ॥ ४३ ॥
इत्येवं राजधर्मेण सशरीरो दिवन्नृपः ।
प्रवर्तते हरेर्भक्तस्तस्य लोकद्वये शुभम् ॥ ४४ ॥
इत्येवं सर्वमाख्यातमाह्निकं धर्ममच्युत ।
अकुर्वन्विहितं कर्म निरयं याति दारुणम् ॥ ४५ ॥
इति शाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे द्वितीयांशे वैष्णवाश्रमधर्मवर्णनं नाम अष्टमोऽध्यायः ॥ ८ ॥



## नवमोऽध्यायः ।

अथ निष्कृतिसद्धर्मं वक्ष्ये शृणवन्तु भो द्विजाः ।
विहाय वैष्णवं धर्मं संसारान्न निवर्तते ॥ १ ॥
हरिं च हरिभक्तं च द्विषन्नासुर उच्यते ।
कामक्रोधमदालस्याद् व्यशक्त्यापि तथोच्यते ॥ २ ॥
केषांचिदासुरं जीवं हृषीकं देहमप्युत ।
द्रविणं वैभवं चान्यद् ह्यसत्कार्येण युज्यते ॥ ३ ॥
जीवस्य चासुरत्वे तु गतिर्नैव कथंचन ।
मनसश्चासुरत्वे तु गतिर्योगबलाद्भवेत् ॥ ४ ॥

देहस्य चासुरत्वे तु शास्त्रे गतिरुदाहृता ।
वैभवस्य तु वैराग्ये तपसा सर्वतो भवेत् ॥ ५ ॥
प्रवाहेनातिवर्तन्ते संसारस्य नराः सुराः ।
हृषीकान्न दिवः प्राप्तिर्देहान्नोत्कृष्टजातिता (?) ॥ ६ ॥
हरिद्वेषात्प्रवाहः स्याद्भक्तद्वेषात्तथासुरः ।
शास्त्रद्वेषाद्विमूढत्वं तेषां चक्राद्गतिर्भवेत् ॥ ७ ॥
न हरिं संश्रयन्ते ये भ्रमन्ते स्वस्वकर्मसु ।
दीक्षया रहितो जन्तुः पशुत्वं याति भूरिशः ॥ ८ ॥
प्रसन्ना ये न सेवन्ते नोपकुर्वन्ति वा गुरून् ।
ते पिशाचा भवन्त्येव तेषां नाम्ना हि सद्गतिः ॥ ६ ॥
सेवमानाश्च ये दम्भात्कामक्रोधाद्व्रजन्ति वा ।
बकत्वं च कपित्वं च कुण्डलित्वं व्रजन्ति ते ॥ १० ॥
लोभेनासूयया वापिद्वेषमोहादिभिः परे ।
तेषां तु स्वानुरूपा वै योनिर्वा गद एव च ॥ ११ ॥
वृन्दावनं रोपयेयुः कुर्युश्चोपकृतिं पराम् ।
नैवेद्यमाल्यवस्त्राद्यैः शुद्धिं कुर्युः परां शुभाम् ॥ १२ ॥
भक्तानां सेवनाद्वापि गवां संसेवनादपि ।
गुरूणां तोषणान्मुच्येत् व्रजस्य परिदर्शनात् ॥ १३ ॥
क्षुद्रेषु वाऽपराधेषु तीर्थपानाच्छुचिर्भवेत् ।
अवैष्णवस्य संपर्के स्नानं ध्यानं हरेर्मतम् ॥ १४ ॥
नाश्लीलं च वदेत्तत्र न हास्यं नानतिं चरेत् ।
न स्त्रीषु सानुरागः स्यान्न द्वेष्टारिषु वा भवेत् ॥ १५ ॥
न दम्भं न च मात्सर्यं प्रष्टुर्मानं च दर्शयेत् ।
नास्तिक्यमालसालापान् दूरतः परिवर्जयेत् ॥ १६ ॥
यानं च पादुकाच्छत्रमौत्क्रोश्यं ताडनादिकम् ।
भोजनं संगमं निद्रामुच्चारं दूरतस्त्यजेत् ॥ १७ ॥

वार्तां च व्यवहारं च न कुर्याच्च हरेः पुरः ।
नातिदैन्यं प्रमोषंश्च तथा दुर्भाषणं त्यजेत् ॥ १८ ॥
एतान्नुष्ठितो रक्ष्यो भवेज्जन्मनि जन्मनि ।
स्वपापस्यानुकूल्येन तस्मात्प्रतिकृतिं चरेत् ॥ १९ ॥
पाकस्याशुद्धियोगे तु भवेदुल्कामुखोऽसुरः ।
जलस्याशुद्धियोगे च जायते ब्रह्मराक्षसः ॥ २० ॥
स्थलस्याशुद्धिकरणे भवेत्सूचिमुखोऽपि सः ।
फलवस्त्रान्नशाकादौ निषिद्धार्थाभियोजनात् ॥ २१ ॥
जायते स्वानुरूपेण श्वादियोनिगदैर्युतः ।
अप्रीतिं समवाप्नोति हरेरस्यानुवर्तिनाम् ॥ २२ ॥
अनाचारेऽप्यशुद्धौ च सुराय (?) व्रतमाचरेत् ।
पूजाभङ्गे तु देवस्य चरेद् ब्रह्महणो व्रतम् ॥ २३ ॥
काललोपे सुवर्णस्य स्तेयस्य व्रतमिष्यते ।
गुरुतुल्यव्रतं कुर्यादुपचारं विलोपयेत् ॥ २४ ॥
पापोपपापैर्युज्येत दोषैरन्यैर्यथायथम् ।
तेषां विनिग्रहे देवं तोषन् स्वमनुं जपेत् ॥ २५ ॥
आजीव्यच्छेदनं कार्यं समयादेश्च भञ्जने ।
पुनस्तथैव संपाद्य नाम्नां कोटिमुदाहरेत् ॥ २६ ॥
ध्वजभङ्गे महाशान्तिः प्रासादप्रतिमादिषु ।
दाहेऽत्र नीचसंसर्गे ब्रह्महत्यादिसङ्गमे ॥ २७ ॥
कुर्यादर्चनदानादिशुद्धिः शास्त्रोक्तवर्त्मना ।
वेदपारायणैर्विप्रतर्पणैर्धेनुतर्पणैः ॥ २८ ॥
विशुद्ध्यते जगत्सर्वं गङ्गाम्भःक्षालनादिभिः ।
तथोपकृतिभङ्गे च अङ्गप्रत्यङ्गयोरपि ॥ २९ ॥
ब्रह्महत्याव्रतं कुर्यात्तोषयेच्च जगद्गुरुम् ।
सहस्रब्रह्महत्याया व्रतं मूर्तेर्विनाशने ॥ ३० ॥

रहोभवां प्रतिष्ठाप्य अन्यैः पूजां प्रवर्तयेत्।
सर्वेषामपराधानां प्रणामैः शुद्धिरिष्यते ॥ ३१ ॥
प्राणायामैर्यथान्यत्र तथैतानि विवर्जयेत्।
श्रीमद्भागवतं शास्त्रं बहुनाभ्यस्य मुच्यते ॥ ३२ ॥
मूर्तिस्तेये उपवसेत् त्यजेत्किञ्चिन्निजप्रियम्।
गुरोरपकृतिं कृत्वा प्रसाद्यैनं प्रमुच्यते ॥ ३३ ॥
भक्तिचिह्नं परित्यज्य वेदत्यागव्रतं चरेत्।
अदीक्षितस्य विप्रस्य योजने जलपाकयोः ॥ ३४ ॥
हरौ शुद्धिः पुनः कार्या जपेल्लक्षं महामनुम्।
पञ्चैकादशलक्ष्यं च ज्ञाने तु द्विगुणं भवेत् ॥ ३५ ॥
अन्यनृणां नियोगे तु पुनः संस्कारमर्हति।
प्रायश्चितमशेषाणां पापानां हरिकीर्तनम् ॥ ३६ ॥
प्रसादतीर्थग्रहणं वैष्णवानां च भोजनम्।
गवां शुश्रूषणं चास्य दर्शनं गुरुवन्दनम् ॥ ३७ ॥
विशोधनं च सर्वेषामेनसां शुद्धिरिष्यते।
तथापि समयार्थं वै मया किंचिन्निरूपितम् ॥ ३८ ॥
इति शाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे द्वितीयांशे प्राय-
श्चित्तधर्मवर्णनं नाम नवमोऽध्यायः ॥ ९ ॥

समाप्तश्च द्वितीयांशः।



# अथ तृतीयांशः ।

## तत्र प्रथमोऽध्यायः ।

---o---

ऋषय ऊचुः—

भगवन्सर्वधर्मज्ञ शाण्डिल्य वद नो मुने ।
विष्णोः प्रियाणां भूतीनां माहात्म्यं निर्णयक्रमम् ॥ १ ॥

शाण्डिल्य उवाच—

सर्वं श्रुतिस्मृतिगणैः सुरैश्च मुनिभिस्तथा ।
एको नारायणो देवो निर्गुणो वस्तु ईर्यते ॥ २ ॥
निराश्रयो निराकारो निर्विकारो निरन्तरः ।
नित्यो निजानन्दपूर्णो गोविन्दो योगधीर्यतः ॥ ३ ॥
स एव स्वेच्छया देवः पूर्णानन्दैकविग्रहः ।
एकाकी रन्तुमेवासौ लीलाशक्तिं ससर्ज ह ॥४ ॥
ततोऽसौ गोकुले दिव्ये सच्चिदानन्दमन्दिरे ।
मुरलीं नादयन्व्यक्तं लावण्यैकधनो युवा ॥ ५ ॥
द्विधा स वामतो वामा लीलाधामसुखात्मकाः ।
पुम्भावमाश्रितः प्रादुर्भाव्य लीलां निजात्मिकाम् ॥ ६ ॥
वासुदेवः स भगवानुक्तो भागवतागमे ।
तस्मात्सङ्कर्षणं प्राहुरादिः श्रुतिचिदात्मकम् ॥ ७ ॥
प्रद्युम्नः स्यान्मतिर्यस्मादनिरुद्धो मनोमयः ।
सर्वं तद्वासुदेवस्य परिणामान्तरात्मकम् ॥ ८ ॥
एवं जगत्यसौ देवः क्रीडते स्वात्मके स्वयम् ।
ततोऽसौ सगुणो भूत्वा मायाक्षरमथासृजत् ॥ ९ ॥

यदृच्छामृच्छया (?) सृष्ट्वा ताभ्यां सर्वं जजान सः ।
माया सृष्टे जले शेते ततो देवव्रती शुभा ॥ १० ॥
ततो वन्हित्रयी लोकत्रयी कालत्रयी ततः ।
ततो जगज्जगत्यत्र त्रयो देवाः सुपूजिताः ॥ ११ ॥
तत्रापि वैष्णवी मूर्तिर्मुकुन्दस्यातिवल्लभा ।
सत्त्वं सन्निहितं तस्य निर्गुणस्य परात्मनः ॥ १२ ॥
विप्रकृष्टं रजस्तस्य विप्रकृष्टं ततस्तमः ।
अनादिनिर्गुणो देवस्तां मूर्तिं समुपस्थितः ॥ १३ ॥
व्याप्नोति मुकुरं भव्यं प्रभामिव प्रभाकरः ।
विलुप्तस्वगुणा ह्येते मताः शुद्धाः परात्मकाः ॥ १४ ॥
सैव शास्त्रे क्वचित्प्रोक्तः सोमः परशिवो हरः ।
निर्गुणोऽसौ निराकारो लिङ्गरूपी महेश्वरः ॥ १५ ॥
एवं विरिञ्चिर्वेधापि महाविष्णुः स्वयं प्रभुः ।
अन्ये देवविशेषाश्च मनश्च प्रणवादयः ॥ १६ ॥
एतेषां गुणमुक्तानां संवित्तिस्तु गुणोन्मुखी ।
ततोऽस्य तारतम्ये सा शास्त्रं संप्रतिपद्यताम् ॥ १७ ॥
निर्गुणात्सगुणः सत्वस्ततो जातं रजस्तमः ।
ततः परशिवादीनां नैर्गुण्यं स्वगुणैर्मतम् ॥ १८ ॥
ब्रह्मैव तादृशं तस्मात्तत्तदाकारमाश्रितम् ।
शिवेश्वरमहेशानामृतसोमहरादिभिः ॥ १९ ॥
शैवी मूर्तिः परा सा तु प्रोच्यते वेदवादिभिः ।
एवं विरिञ्चिर्वेधा हि वेदगर्भादिनामभिः ॥ २० ॥
वैष्णवो पुरुषाध्यक्षसत्यनाम्नाच्युतोऽव्ययः ।
एतेषां मूलभूता तु प्रोक्ता नारायणीश्वरा ॥ २१ ॥
निर्गुणानां त्रयाणां स्वैः सा चतुर्णां तु पञ्चमी ।
प्रणवा लक्ष्यरूपा सा योगिध्येया निरञ्जना ॥ २२ ॥

अनन्तसूर्यसंकाशा नित्याऽव्यक्ता सनातनी ।
यस्येच्छया स पुरुषः प्रकृत्या कार्यमीहते ॥ २३ ॥
शैवशास्त्रे तु सा शुद्धा निष्कलापि परामृता ।
शाक्ते कुण्डलिनी संवित् परा शम्भुगुणाच्छुभा ॥ २४ ॥
वैष्णवे ह्लादिनी नित्या शान्ता नारायणीश्वरा ।
यां निर्लेपां जगुः साङ्ख्याः क्लेशकर्माशयोज्झिताम् ॥ २५ ॥
योगाचार्या जगद्धात्रीं नित्याष्टगुणकां परे ।
केवलानन्दचिन्मात्रां तामौपनिषदा जगुः ॥ २६ ॥
सा पञ्चमी तु सर्वेषामेषामात्मतया स्मृता ।
ततः परस्तु यः प्रोक्तः श्रीपतिः पुरुषोत्तमः ॥ २७ ॥
पूर्णब्रह्मसदानन्दपराकाष्ठावधिश्च सः ।
यतो नास्ति परः कश्चिदधिदेवो हरिः प्रभुः ॥ २८ ॥
गोविन्दो वेदवेदान्तवन्द्यो भक्तिमितो विभुः ।
परमानन्दमात्रोऽसौ लीलामूर्तिर्निरञ्जनः ॥ २९ ॥
आकाशाद्याः क्षरा सर्वे निजोपाधिगुणादिभिः ।
प्रविशन्ति नरा यत्र सोऽक्षरः परमेश्वरः ॥ ३० ॥
क्षरात् क्षरमतीतो यः संमतः पुरुषोत्तमः ।
प्राकृतत्वं क्षरत्वं वा तेषां स्वौपाधिकैरपि ॥ ३१ ॥
अतो ह्यक्षरता नास्ति क्वचिन्नारायणादृते ।
पुरुषात्सः परः प्रोक्तो विष्णुरङ्गभवः पुमान् ॥ ३२ ॥
वामजो वामदेवोऽसौ स्त्रीव्यक्तिः समुदाहृता ।
तृतीया प्रकृतिर्धातुर्यद्देशा ये च ते च ते ॥ ३३ ॥
विशुद्धसत्वधामास्ति विष्णुर्निःश्रेयस्कृन्नृणाम् ।
सृष्टिकृद्राजसो ब्रह्मा शिवः संहारकृत्तमः ॥ ३४ ॥
सात्विकेषु च शास्त्रेषु कल्पे कालेऽधिकारिणि ।
संस्तुतो भगवान् विष्णू राजसेषु परे सुराः ॥ ३५ ॥

तामसेषु शिवः प्रोक्तो मुख्योऽसौ परमेश्वरः ।
यदा हि सात्विकः कल्पस्तदा ब्रह्मा हरिर्भवेत् ॥ ३६ ॥
ततो रुद्रस्ततोऽन्येऽपि प्रायश्चैवं हि सर्वदा ।
राजसेषु स्वयं ब्रह्मा ततो हरिहरादयः ॥ ३७ ॥
शक्त्या वा शिवतः सृष्टिर्हरिरुद्रविरिञ्चयः ।
जायन्ते नामसंकल्पाद्धरेरेता विभूतयः ॥ ३८ ॥
संकीर्णेषु च चान्येभ्यः सर्वेभ्यो दृश्यते तथा ।
ब्रह्मरुद्रादिदेवेभ्यः सृष्टिरुक्ता यथायथम् ॥ ३९ ॥
स्वैः स्वैर्गुणैर्निर्गुणता तेषां निर्गुणता तु या ।
सैव मुक्तिः स्मृता तत्र नचौपनिषदी तु सा ॥ ४० ॥
परमानन्दरूपान्या मुक्तिर्लीलाप्रवेशतः ।
सात्विकेऽपि च कल्पेऽपि दुर्लभाऽनुग्रहं विना ॥ ४१ ॥
हरेरनुग्रहात्सातु जायते नान्यथा क्वचित् ।
एवं यो निर्गुणः प्रोक्तो विभूतीनां हरेरिह ॥ ४२ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे
तृतीयांशे प्रथमोऽध्यायः ॥ १ ॥

---

## अथ द्वितीयोऽध्यायः ।

शाण्डिल्य उवाच—

तस्मात्तु वैष्णवो धर्मः श्रेष्ठः सत्वाधिकारिषु ।
ततो निर्गुणता ह्याशु तदाशु हरितोषणम् ॥ १ ॥

यस्य शेषा महेशा ये वशा यस्य सुरेश्वराः ।
क्लेशापायः परानन्दावाप्तिर्यस्मात्तमाश्रयेत् ॥ २ ॥
हरिरेवेदृशो देवः करुणावरुणालयः ।
तं विहाय सुधासिन्धुं कोऽन्यं वै खातकोदकम् ॥ ३ ॥
हरिं समाश्रिता देवा ऋषयश्च तपोधनाः ।
देवदेवो हृषीकेशो ब्रह्मण्यस्तेन कीर्त्यते ॥ ४ ॥
वर्णेषु ब्राह्मणैरर्च्यः परहंसैर्यथाऽऽश्रमे ।
सर्वैरेव समर्च्योऽसौ देवैर्जीवैः सुखाप्तये ॥ ५ ॥
नित्योऽसौ निगमे गीतः सृष्टिस्थित्यप्यये प्रभुः ।
जीवाः स्वभावतो दासास्तदंशाश्चेतना इमे ॥ ६ ॥
स एव पुरुषोऽध्यक्ष आत्मभूतः सनातनः ।
पूर्वैरुपासितः सिद्धैः सर्वत्रामृतदः सताम् ॥ ७ ॥
य इच्छेदात्मनो मोक्षं संसाराल्लघुसाधनैः ।
स एकं देवदेवेशं श्रीनारायणमाश्रयेत् ॥ ८ ॥
शम्भुः शेषश्च श्रीश्चैव यं सदैव समाश्रिताः ।
मङ्गलं मङ्गलानां स ततः कोऽन्यः परो हरेः ॥ ९ ॥
यत्पादाम्भोजसंभूतजाह्नव्या पावितो हरः ।
दक्षशापाद्विनिर्मुक्तस्ततः कोऽन्यः परो हरेः ॥ १० ॥
वेदवेदान्तसच्छास्त्रैः स्तूयते यः सनातनः ।
यश्चावतारैरवति ततः कोऽन्यः परो हरेः ॥ ११ ॥
त्रिपुरस्य जये येन कीर्त्तिर्दत्ता महात्मनः ।
गौर्भूत्वा चामृतं पीत्वा ततः कोऽन्यः परो हरेः ॥ १२ ॥
येन पाशुपतास्त्रं च दत्तं पुष्टं स्वतेजसा ।
दक्षक्रतुविनाशाय ततः कोऽन्यः परो हरेः ॥ १३ ॥
दत्तं येन पिनाकं च त्रिशूलं पार्वती प्रिया ।
कैलासनिलयं कीर्त्तिस्ततः कोऽन्यः परो हरेः ॥ १४ ॥

वृकबाणकपालेभ्यः पौलस्त्यात्काशिराजतः।
त्रातो येन हरो दुःखे ततः कोऽन्यः परो हरेः॥ १५॥
पार्वती येन संत्राता लिङ्गं छित्वा महेशितुः।
स्वीकृता जाम्बवत्याद्यास्ततः कोऽन्यः परो हरेः॥ १६॥
येन वै मोहनीरूपे महेशोऽपि निपातितः।
प्राप्तो निधुवनं दीनो ततः कोऽन्यः परो हरेः॥ १७॥
प्रतिगृह्य प्रियां तस्य हृदि कृत्वा गतह्रियम्।
प्रवर्तिता लिङ्गपूजा ततः कोऽन्यः परो हरेः॥ १८॥
तारकं परमं मन्त्रं दत्त्वा वाराणसीस्थितिः।
प्रभावश्चाधिको दत्तस्ततः कोऽन्यः परो हरेः॥ १९॥
यस्य नाम्नः प्रभावेन पीतं हालाहलं विषम्।
कपालं गलितं शम्भोस्ततः कोऽन्यः परो हरेः॥ २०॥
यस्य प्रीत्यै वितनुते तपो नित्यं महेश्वरः।
सेवते तपनो नित्यं ततः कोऽन्यः परो हरेः॥ २१॥
सहस्रभुजदण्डस्य नृसिंहस्य महोजसि।
शरभः शलभो जातस्ततः कोऽन्यः परो हरेः॥ २२॥
यस्य वृन्दावने नित्यं याति स्त्रीभावतो हरः।
प्रदीपं तत्र गृह्णाति ततः कोऽन्यः परो हरेः॥ २३॥
भिक्षुवेशधरो रुद्रो गोकुले यत्पदाम्बुजम्।
स्पर्शं ययाचे तन्मातुस्ततः कोऽन्यः परो हरेः॥ २४॥
स्त्रीवियोगविदग्धाङ्गो बाणप्राणाहमानतः।
प्रापास्ये बहुनेत्राणि ततः कोऽन्यः परो हरेः॥ २५॥
निर्णीतं ब्रह्मणा पूर्वं धनुषोऽस्य पराक्रमम्।
बाणकाशीशयोर्युद्धे ततः कोऽन्यः परो हरेः॥ २६॥
यस्य सत्वपरीक्षा तु भृगुणा ब्रह्मसंसदि।
सरस्वत्यास्तटे प्रोक्ता ततः कोऽन्यः परो हरेः॥ २७॥

यत्प्रसादं नो विभज्य प्राप शापं प्रियाकृतम् ।
नित्यं भजति यं शम्भुस्ततः कोऽन्यः परो हरेः ॥ २८ ॥
गजेन्द्रमोक्षणं चक्रे यश्चैकशो दयानिधिः ।
यस्य वाहाश्रिता वेदास्ततः कोऽन्यः परो हरेः ॥ २९ ॥
द्रुहिणं यो विमुह्यन्तं सर्वामरगणैः सह ।
पाति निजावतारेण ततः कोऽन्यः परो हरेः ॥ ३० ॥
यस्य नारायण इति गोविन्द इति नामनी ।
अनन्येन प्रयुज्येते ततः कोऽन्यः परो हरेः ॥ ३१ ॥
अविद्याबन्धनिर्मुक्तैः स्वाराज्यावाप्तये नृणाम् ।
अस्त्येको वैष्णवो धर्मः सज्जनस्तं समाश्रयेत् ॥ ३२ ॥
वर्णाश्रमाचारवतां कर्तव्या नित्यमेव हि ।
अन्येषामपि सर्वेषां हरिभक्तिर्विमुक्तये ॥ ३३ ॥
हरिर्देहभृतामात्मा माता धाता पिता प्रभुः ।
गुरुः प्रियो विहायैनं कृतघ्नो जायते बुधः ॥ ३४ ॥
श्रुतिस्मृतिपुराणैश्च सद्भिर्विद्भिः पुरातनैः ।
उपदिष्टो हि यो धर्मः स श्रेयान् सर्वदेहिनाम् ॥ ३५ ॥
गौणो वर्णाश्रमाचारो देहशुद्ध्या दिवः प्रदः ।
निःश्रेयान्वै वैष्णवाचारो जीवशुद्ध्यामृतप्रदः ॥ ३६ ॥
विहाय वैष्णवं धर्मं संसारं तर्तुमिच्छति ।
त्यक्त्वा नावं समुद्रस्य पारं किं याति मानवः ॥ ३७ ॥
बहुजन्मकृतैः पुण्यैः सात्त्विकानां नृणामिह ।
श्रद्धा भवति सद्धर्मे वैष्णवे मुनिभिः श्रिते ॥ ३८ ॥
एतस्य समनुष्ठाने कृतकृत्यो भवेत्पुमान् ।
स गुरुर्जगतां पूज्यः स्पृहणीयो दिवौकसाम् ॥ ३९ ॥
एतस्माद्विमुखो यस्तु तन्मुखालोकने नृणाम् ।
पातकं सुमहद् भूयात् तादृशं परिवर्जयेत् ॥ ४० ॥

यस्तु धर्ममिमं लोके ग्राहयन् स प्रवर्तते ।
तमेकं गुरुमाश्रित्य प्रियो भवति शार्ङ्गिणः ॥ ४१ ॥

दीक्षां वा उपदेशं वा प्रपत्तिं वापि यश्चरेत् ।
सद्धर्मे वैष्णवे तस्मिन् स सिध्दार्थो निगद्यते ॥ ४२ ॥

इति शाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे तृतीयांशे
द्वितीयोऽध्यायः ॥ २ ॥

——०——

## अथ तृतीयोऽध्यायः ।

अथातः श्रूयतां विष्णुप्रियाणां धारणं शुभम् ।
तद्वक्ते क्रमतः सर्वं श्रुतिस्मृतिगिरां मतम् ॥ १ ॥
दीक्षां वा ह्युपदेशं वा प्रपत्तिं वापि सद्गुरोः ।
लब्ध्वा गुरुं हरिं नत्वा संपूज्योपायनैरपि ॥ २ ॥
तुलसीकाष्ठसंभूतां सूक्ष्मां श्लक्ष्णां मनोहराम् ।
आकण्ठहृदयोन्मानां सूत्रप्रोतां समर्पयेत् ॥ ३ ॥
संशोध्य मूलमन्त्रेण गुरुः कृष्णार्पितां स्रजम् ।
कृत्वा निजगले दद्यात्प्रपन्नायात्मशुद्धये ॥ ४ ॥
दीक्षायां च विधिः प्रोक्तः उपदेशेऽपि सत्कृतिः ।
प्रपत्तौ तु जने श्रद्धा गुरो चैवानुकम्पने ॥ ५ ॥
सुस्नातं सन्मुखासीनं प्रणतं श्रद्धया युतम् ।
मूलार्णं कृपया दत्वा गुरुर्दद्यात्स्रजं ततः ॥ ६ ॥

तुलसीकाष्ठसंभूते माले विष्णुजनप्रिये ।
बिभर्मि त्वामहं कण्ठे कुरु मां कृष्णवैभवम् ॥ ७ ॥
यथा त्वं वल्लभा विष्णोर्नित्यं विष्णुजनप्रिया ।
तथा मां कुरु देवेशि नित्यं विष्णुजनप्रियम् ॥ ८ ॥
यत्कृष्णो स्वरूपं कृत्वा प्राविशत्त्वां वनस्पते ।
अतस्तद्ध्येकविंशतिधा संभरामि सुसंमतम् ॥ ९ ॥
भृगुवाक्यं दधेद्विप्र उपदेशो महात्मनः ।
अन्यः पूर्वोदितैर्मन्त्रैः सर्वो वा मूलमन्त्रतः ॥ १० ॥
नत्वा सोपायनात्मानं गुरवे स्वं समर्पयेत् ।
अनुग्रहं गुरोर्लब्ध्वा ग्राह्यं पादावनेजनम् ॥ ११ ॥
अकालमृत्युहरणं सर्वव्याधिविनाशनम् ।
विष्णोः पादोदकं पीत्वा सर्वपापैः प्रमुच्यते ॥ १२ ॥
परमानन्ददं दिव्यं दिव्यलीलानुभावुकम् ।
श्रीगुरोश्चरणाम्भोजामृतं पेयं सदैव हि ॥ १३ ॥
ततः पुण्ड्रं दधेद्भाले हर्यर्पितसुगन्धकैः ।
द्वादशाङ्गेषु पूर्वोक्तविधिना मन्त्रपूर्वकम् ॥ १४ ॥
ऊर्ध्वपुण्ड्रं हरेः प्रेष्ठं तत्सौभाग्यविभूषणम् ।
धारितं वैष्णवैर्नित्यं धारणान्मुक्तिदो भवः ॥ १५ ॥
शङ्खचक्रगदापाणे द्वारकानिलयाच्युत ।
गोविन्द पुण्डरीकाक्ष मां पाहि शरणागतम् ॥ १६ ॥
धारयेदूर्ध्वपुण्ड्राणि परैर्वा नामभिर्हरेः ।
चक्रतीर्थजमृत्स्नाभिर्मुद्राषट्कं तु धारयेत् ॥ १७ ॥
गोपीचन्दन पापघ्न विष्णुदेहसमुद्भव ।
चक्राङ्कित नमस्तुभ्यं धारणान्मुक्तिदो भव ॥ १८ ॥
ततो हरेर्गुरोर्वापि प्रसादं प्राशयेत्सुखम् ।
कृत्वा पाणिगतं भव्यं प्रणम्य च यथाविधि ॥ १९ ॥

ब्रह्माद्याः सनकाद्याश्च नारदाद्या महत्तमाः ।
हरिभुक्तावशिष्टानां सर्वे गृह्णन्ति वैष्णवाः ॥ २० ॥
वैष्णवं च ततो नाम दासान्तमवरश्चरेत् ।
हरिपूजादिनियमं धारयेच्च ततः परम् ॥ २१ ॥
न धारयति यो दीक्षां वैष्णवीं पापनाशिनीम् ।
नास्ति संसारतो मुक्तिस्तस्य साधनकोटिभिः ॥ २२ ॥
दीक्षा यथा हि सावित्र्या द्विजानां समुदाहृता ।
तथैव वैष्णवी दीक्षा स्वैः साकं समुदाहृता ॥ २३ ॥
गर्भतोऽप्युपदेशः स्याज्जन्मतो व्रततोऽपि वा ।
यदा कदाप्यसौ कार्या प्रपत्तिर्वापि सद्गुरोः ॥ २४ ॥
स्ववर्णाश्रमधर्मैस्तु कृतैस्तु बहुजन्मभिः ।
सौरी भक्तिर्भवेत्पश्चाच्छाक्ती गाणपती ततः ॥ २५ ॥
शैवी ततस्ततो ब्राह्मी ततो निष्कामशेमुषी ।
ततश्चापि सदाचारो विरक्तिः शुद्धभावना ॥ २६ ॥
ततश्च सद्गुरोर्लाभो दीक्षा चाथ सुवैष्णवी ।
ततो महात्मनां सङ्गस्ततो भक्तिर्दृढा हरौ ॥ २७ ॥
फलरूपा ततो भक्तिर्भवेत्सा प्रेमलक्षणा ।
यदा महात्मनां मन्त्रः परमानन्दसंस्थितिः ॥ २८ ॥
स्वाराज्यसिद्धिः सा प्रोक्ता सा प्रोक्ता कृतकृत्यता ।
अतो हि वैष्णवी दीक्षा ग्राह्या सर्वप्रयत्नतः ॥ २९ ॥
एतस्या धारणात्सद्यो जीवन्मुक्तो भवेन्नरः ।
अन्याग्रासेन तस्यास्ति व्यवहारो नृणां कृते (?) ॥ ३० ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे
तृतीयांशे तृतीयोऽध्यायः ॥ ३ ॥

——:o:——

## अथ चतुर्थोऽध्यायः ।

शाण्डिल्य उवाच—

तुलसीकाष्ठमाहात्म्यं यथोक्तमृषिसत्तमैः ।
तत्प्रोच्य तेन संक्षेपात्तिलकादेस्ततः परम् ॥ १ ॥
न धारयति यो मालां तस्य सत्कर्म निष्फलम् ।
तस्माद्धार्या प्रयत्नेन अन्यथा पतितो भवेत् ॥ २ ॥
पापं कोटिगुणं तस्य पुण्यमेकगुणं भवेत् ।
विपरीतं भवेच्चैतत् तुलसीकाष्ठवर्जने ॥ ३ ॥
न स्पृशन्ति हि पापानि तुलसीकाष्ठधारिणम् ।
पुण्यानि सर्वतोऽप्येनमाश्रयन्ति स्वके तनौ ॥ ४ ॥
वर्णाश्रमाचारवता धार्या तुलसिमालिका ।
शिखोपवीतवन्नित्या जगावाथर्वणश्रुतिः ॥ ५ ॥
सर्वेषामेव लोकानां भगवद्भक्तिमिच्छताम् ।
कण्ठे तुलसिकाष्ठस्य माला धार्या सदैव हि ॥ ६ ॥
नातः परं परं श्रेयः साधनं श्रुतिसंमतम् ।
धारणं तुलसीकाष्ठमालाया मुनिसत्तमाः ॥ ७ ॥
श्रौते स्मार्ते च पौराणे मिश्रके तान्त्रिकेऽपि च ।
धार्या तुलसीकाष्ठस्य माला परमपावनी ॥ ८ ॥
साद्गुण्यं विगुणो गच्छेत् सद्गुणो क्षम्यतामपि ।
धर्मः सोऽपि हरेः प्रीत्यै स्यात्तुलस्या इति श्रुतम् ॥ ९ ॥
स्नाने दाने जपे होमे स्वाध्याये पैतृके तथा ।
वैश्वदेवे च दैवे च अन्यस्मिन्नपि वैदिके ॥ १० ॥
प्रायश्चित्तेऽथ सन्ध्यासु पूर्ते दीक्षादिकर्मणि ।
तुलसीमालया हीनो नाधिकारी प्रकीर्तितः ॥ ११ ॥

तुलसीमालया हीनो यत्सत्कर्म समाचरेत्।
तदा तु (न)सम्भवेदेव इत्युक्तमृषिसत्तमैः॥ १२॥
पितृस्थाने सुरस्थाने तुलसीकाष्ठधारिणम्।
भोजनं विष्णुपादीयश्राद्धस्य फलमश्नुते॥ १३॥
तुलसीमालया युक्तो यत्राश्नाति द्विजोत्तमः।
सिक्थे सिक्थेऽश्वमेधस्य यजमानोऽश्नुते फलम्॥ १४॥
देवकार्येषु सर्वेषु पितृकार्ये विशेषतः।
भोजयेद् वैष्णवान् विप्रान् निष्कामेषु विशेषतः॥ १५॥
वैष्णवेषु प्रभुक्तेषु तुलसीकाष्ठधारिषु।
सम्पूर्णं तद्भवेच्छ्राद्धं विगुणं चापि फल्गुवत्॥ १६॥
विहाय वैष्णवं योऽन्यं श्राद्धे सम्भोजयेद् द्विजम्।
न तस्य तद्भवेच्छ्राद्धं पितॄणां चात्मनो मुदे॥ १७॥
दैवकार्येषु ये केचिद्ग्राह्या विप्रा न पैतृके।
वरं श्राद्धं न कर्तव्यं न वै ग्राह्यो ह्यवैष्णवः॥ १८॥
गुणवत्सु च विप्रेषु नियुक्तेषु सुकर्मसु।
वैष्णवं कल्पयेन्मुख्यं तदनर्हेऽपि साक्षिणम्॥ १९॥
वैष्णवः प्रथमः पूज्यो यथा देवो रमापतिः।
तं तिरस्कृत्य विद्वांसं सुकृतात्स्वात् स हीयते॥ २०॥
सर्वेषामेव वर्णानामाश्रमाणां मुनीश्वराः।
कार्या वै वैष्णवी भक्तिस्तुलसीकाष्ठधारणम्॥ २१॥
ब्राह्मणस्य विशेषेण संन्यस्तस्य विशेषतः।
यतो नारायणेत्येवं तस्य वाक्यमुदाहृतम्॥ २२॥
गृहिणोऽन्येषु देवेषु प्रसक्तस्योदितो विधिः।
धृतव्रतानां सर्वेषामेको ध्येयो हरिः प्रभुः॥ २३॥
देवानां तु हरेर्भक्तिः पितॄणां चापि वेधसः।
मुनीनां च शिवे भक्ती रुद्रे भक्तिस्तु रक्षसाम्॥ २४॥

नृणां चैव रमाभक्तिर्यतः स्वानुगुणे रुचिः ।
देवेषु सत्वप्रकृती राजसी पितृकेषु च ॥ २५ ॥
दैत्येषु तामसी बुद्धिः प्रकृत्यायं विनिर्णयः ।
वेदवेदान्तनिष्ठा ये निष्कामाश्च मुमुक्षवः ॥ २६ ॥
शौचाचारपराः स्निग्धा हरिभक्ता दिवौकसः ।
विपरीता नरा दैत्याः पैतृका राजसा नराः ॥ २७ ॥
काम्ये कर्मणि युक्ताश्च लौकिकाः कामलम्पटाः ।
ये भजन्ति हरिं चान्ये तेषां दैवी मतिर्भवेत् ॥ २८ ॥
पुरुषः पुरुषैः पूज्यः स्त्रीभिः स्त्रीः षण्ढकैः स चेत् ।
पुरुषो विष्णुरीशानः स्त्रीर्वेधाश्चैव षण्ढकः ॥ २९ ॥
महापापानि पापानि अतिपापानि यान्युत ।
उपपानुपापानि प्रकीर्णेनांसि यानि च ॥ ३० ॥
यानि चार्द्राणि शुष्काणि स्थूलसूक्ष्माणि यान्युत ।
मनोवाक्कायजातानि भूतभाविभवानि च ॥ ३१ ॥
तेषां मूलानि नश्यन्ति तुलसीकाष्ठधारणात् ।
तुलसीगात्रसंस्पर्शात्पापराशिर्विनश्यति ॥ ३२ ॥
वृन्देति सुरसा चेति तुलसीति प्रकीर्तिता ।
हरिप्रियेति नाम्नापि हन्ति पापानि सा नृणाम् ॥ ३३ ॥
ख्याता वृन्देति गोलोके सुरसेति सुरालये ।
तुलसीत्यपिभूर्लोके एवं सापि त्रिधा मता ॥ ३४ ॥
तोषयित्वा महाविष्णुं लभते मुक्तिमप्युत ।
यस्याः सम्बोधतो लोकस्ततः सा तुलसी मता ॥ ३५ ॥
तुच्छीकरोति संसारं मुक्तिं लाति अभीप्सिताम् ।
विनाति भक्तिं नृहरेस्तुलसी तेन कीर्तिता ॥ ३६ ॥
मा तु प्रोक्ता रमा देवी अलो भूषणवाचकः ।
रमा वा भूषिता यस्मात् तस्मान्मालोदिता बुधैः ॥ ३७ ॥

सर्वैः कुसुमजातैश्च इयं विष्णोरतिप्रिया।
तुलसीधारिणो लोकाः श्रूयन्तेऽतो हरेः पदे ॥ ३८ ॥
यदा तु वैष्णवी सृष्टिः सम्भूता सत्वतो हरेः।
तस्यां जाता प्रिया वृन्दा भक्तिस्तां तु समाश्रिता ॥ ३९ ॥
वस्वक्षरो महामन्त्रस्तस्यै श्रीहरिणार्पितः।
अतो भक्तजनैर्वन्द्या पूज्या धार्या प्रयत्नतः ॥ ४० ॥
तामेव देवताः सर्वाः समाश्रित्य हरेः प्रियाः।
तामेव मुनयः सर्वे समाश्रित्य हरेः प्रियाः ॥ ४१ ॥
तामेव मानवा देवाः सनकाद्याः समाश्रिताः।
भजन्ति देवदेवेशं श्रीमुकुन्दमनामयम् ॥ ४२ ॥
ततो धृता जनैः सर्वैः पारम्पर्यत्वमागता।
स्वस्वाम्नायानुगुणतः काले कालेऽधिकारतः ॥ ४३ ॥
असुराणां विमोहाय त्याजिता सा यदा सुरैः।
ततः प्रभृति तस्यास्तु प्रचारो विरलोऽभवत् ॥ ४४ ॥
तस्मान्महद्भिः संधार्या कण्ठे तुलसिमालिका।
अन्यथा सत्पथातीतो निरयं याति दारुणम् ॥ ४५ ॥
प्राचीनैः सुमहत्पुण्यैः कृतैर्वर्णाश्रमाश्रितैः।
देवानां जायते श्रद्धा धारणे तुलसीस्रजः ॥ ४६ ॥
अनुग्रहं विना साक्षान्महाविष्णोर्महात्मनाम्।
तुलस्या धारणे श्रद्धा जायते न कदाचन ॥ ४७ ॥
यदैव भाविनी मुक्तिस्तज्जन्मन्येव सन्नृणाम्।
तुलसीधारणे वेदसिद्धे श्रद्धा तदा भवेत् ॥ ४८ ॥
एतदेव हि ब्राह्मण्यमेतदेव शिरोव्रतम्।
एतच्छायाव्रतं ज्ञानं मुक्त्यै वृन्दाविधारणम् ॥ ४९ ॥
असुराणां पुरा चीर्णैः पापैर्दुर्वासनाजुषाम्।
तुलसीधारणे विष्णोः प्रिये श्रद्धा न जायते ॥ ५० ॥

मुख्यं भागवतं चिह्नं तुलसीकाष्ठधारणम् ।
हरेः प्रियतमं तद्धि तद्विहीनो न वैष्णवः ॥ ५१ ॥
तुलसी विधृता येन हरिस्तेन धृतो भवेत् ।
भक्तिरूपा हि सा देवी भक्त्यधीनो हरिर्यतः ॥ ५२ ॥
एवं हि श्रुतिभिर्गीतं मुनिभिश्च महात्मभिः ।
तस्माद्धार्या प्रयत्नेन तुलसीकाष्ठमालिका ॥ ५३ ॥
गुरोर्हरेः प्रसादेन लब्ध्वा तु तुलसीस्रजम् ।
यो वहेत्कण्ठदेशे तु स प्रीणाति हरिं गुरुम् ॥ ५४ ॥
हरिणा स्वयमेवोक्तं पुरुषार्थं तु धारणम् ।
क्रत्वङ्गं मुनिभिः प्रोक्तं तुलस्या वेदसम्मतम् ॥ ५५ ॥
भगवद्भजनाङ्गं तु जगुर्भागवतोत्तमाः ।
तत्रावश्यकता प्रोक्ता पूर्वं पूर्वं महोदयम् ॥ ५६ ॥
द्विजानां सर्वदा धार्या वैष्णवानां विशेषतः ।
अन्येषामपि सन्धार्या तुलसीकाष्ठमालिका ॥ ५७ ॥
ऊर्ध्वपुण्ड्रं विना चक्रशङ्खमुद्रां विना हरेः ।
विना श्रीतुलसीमालां कृतं पूजादिकं वृथा ॥ ५८ ॥
विना मृदोर्ध्वपुण्ड्रेण वृन्दाकाष्ठस्रजं विना ।
पञ्चमुद्रां विना विष्णोः पूजनं द्रोहमस्य वै ॥ ५९ ॥
मालाहीनेन कण्ठेन न स्थेयं लवमप्यथ ।
न संभाष्यं न चाचम्यं नाप्यर्च्यं नापि संस्वपेत् ॥ ६० ॥
शैवा रुद्राक्षघटितां पद्माक्षैर्विधिपूजकाः ।
शाक्तास्तु विद्रुमाकीर्णां गाणेशा गजदन्तकैः ॥ ६१ ॥
भास्कराः स्फटिकाक्षैस्तु तापसा कुशग्रन्थिभिः ।
कौबेरा मुनयः स्वर्णमाभक्ताश्च यथायथम् ॥ ६२ ॥
केवलं तुलसीमालां वैष्णवा भिक्षुका अपि ।
विरक्तवृत्तिनश्चान्ये धारयेयुरितीरितम् ॥ ६३ ॥

धारणे च जपे दाने तुलस्याश्चातुलं फलम् ।
प्रभावमस्या देव्यास्तु नालं वक्तुं चतुर्मुखः ॥ ६४ ॥
मुनीनां मञ्जरीमाला माला पत्रैर्दिवौकसाम् ।
तुलसीकाष्ठमाला तु नृणां धार्या सदोदिता ॥ ६५ ॥
कृतेऽस्या बीजजं दाम त्रेतायां मञ्जरीभवम् ।
द्वापरे दलदामास्ति काष्ठदाम कलौ स्मृतम् ॥ ६६ ॥
शिरसो मञ्जरीदाम दलदाम गले मतम् ।
गलाद्धृदयपर्यन्तं तुलसीकाष्ठमालिका ॥ ६७ ॥
ध्याने स्यान्मञ्जरीदाम पत्राणां पूजनोत्तरम् ।
काष्ठदाम सदा धार्यमाजन्म मरणावधि ॥ ६८ ॥
एकादशीव्रतं यद्वद् गङ्गास्नानं यथा पुनः ।
तथैव तुलसीमाला सर्वेषां पावनी मता ॥ ६९ ॥
सौरे वा गाणपत्ये वा शैवे वा शाक्तिकेऽपि वा ।
अन्यदेवार्चने वापि ब्राह्मे वापि च संश्रितः ॥ ७० ॥
श्रौतस्मार्तक्रियायां वा तीर्थस्नानादिकर्मणि ।
दाने वा तपसि श्राद्धे ज्ञाने कर्मणि चापरः ॥ ७१ ॥
स्वाध्यायाध्यापने राजासने धर्मप्रचारणे ।
ब्रह्मचर्ये च गार्हे च वन्ये यायावरव्रते ॥ ७२ ॥
पारलौकिकसत्कृत्ये यत्र कुत्रापि संस्थितः ।
तुलसीमालया युक्तस्तस्यानन्तफलं भवेत् ॥ ७३ ॥
एतच्छिरोव्रतं चीर्णमेतद्वेदव्रतं वरम् ।
पारम्पर्यकृतं चैतत् सम्प्रदायो गुरोरदः ॥ ७४ ॥
गुरुभक्तिरियं लोके देवभक्तिरथापि वा ।
प्रव्रज्य तीव्रवैराग्यज्ञानं चौपनिषद्भवम् ॥ ७५ ॥
इयं साधनसम्पत्तिरियमद्वैतवासना ।
अहंब्रह्मात्मिका बुद्धिः सर्वं ब्रह्मेति या परा ॥ ७६ ॥

दासोऽहमिति या चान्या तदीयोऽहमितीतरा ।
केवलोऽहं तथा भावो योग्य एवंविधश्च यः ॥ ७७ ॥
तारकः पाकवश्चापि मन्त्रो वाराणसी तथा ।
या प्रेमलक्षणा वृत्तिः कक्षा या परमा पुनः ॥ ७८ ॥
यत्किंचित्कारणं मुख्यं मुक्तेः स्वाभीष्टसम्मतेः ।
श्रीशस्यानुग्रहं साक्षाद्देवानां समुपस्थितम् ॥ ७९ ॥
तद्धारणं तुलस्यास्तु श्रीगोपीचन्दनस्य च ।
ब्राह्मणः श्रोत्रियो विद्वान् षट्कर्मी शुद्धमानसः ॥ ८० ॥
क्षत्रियो दीक्षितः शुद्धः ब्रह्मण्यः सत्यसङ्गरः ।
धर्मयुद्धकरः शूरः प्रजापालनतत्परः ॥ ८१ ॥
धर्मक्रियारतः शुद्धः संस्कृतोऽपि वणिक् व्ययी ।
शूद्रः सत्सेवको हिंसाविमुक्तो गुरुमाश्रितः ॥ ८२ ॥
नारी नरो वा पण्ढो वा पशुर्वा सुद्विजोऽपि वा ।
सर्वेषामधिकारोऽस्ति तुलसीकाष्ठधारणे ॥ ८३ ॥
पापिनां नाधिकारोऽत्र पतितानां स्वजातितः ।
ऊर्ध्वपुण्ड्रं च तुलसीकाष्ठमालां च पावनीम् ॥ ८४ ॥
हरेरेकाश्रयं मुक्त्वा न गतिः कोटिसाधनैः ।
हित्वैव तुलसीमालामूर्ध्वं पुण्ड्रं हरिं गुरुम् ॥ ८५ ॥
प्रपत्तिं च हरेस्त्यक्त्वा त्यक्त्वाचारं च वैष्णवम् ।
श्रीमद्भागवतं शास्त्रं सद्व्रतैर्नान्यसाधनैः ॥ ८६ ॥
न धार्या तुलसीं हित्वा मालारत्नमयी ह्यपि ।
तया सह प्रशंस्यन्ते माला अन्या यथायथम् ॥ ८७ ॥
तुलसीकाष्ठजां मालां हित्वान्यस्या गतिर्न हि ।
तस्माद्वर्ज्या प्रयत्नेन मालां तुलसिजां विना ॥ ८८ ॥
सदा धार्या सदा धार्या तुलसीकाष्ठमालिका ।
सदा वर्ज्या सदा वर्ज्या मालान्यद्गुणसम्भवा ॥ ८९ ॥

ये कुतर्कपरा दुष्टाः सदाचारवचस्तथा ।
अनादृत्य वदन्तीह नेदं धर्मं सनातनम् ॥ ६० ॥
वचांसि योजयन्त्यत्र अन्यथैव स्वयुक्तितः ।
ऊर्ध्वपुण्ड्रं च तुलसीधारणं हरिपूजनम् ॥ ६१ ॥
निषेधन्ति स्वपाण्डित्यं स्थापयन्ति स्वशिष्टताम् ।
तान्पापिष्ठान्नरान्विद्यादासुरानन्त्यजोद्भवान् ॥ ६२ ॥
ऊर्ध्वपुण्ड्रं च तुलसीधारणं हरिपूजनम् ।
एषां निषेधे नरको यावदाभूतसंप्लवम् ॥ ६३ ॥
एषां संत्रोटने सर्वनरकार्तिः पृथक् पृथक् ।
एषां च संपरित्यागे ब्रह्महा जायते नरः ॥ ६४ ॥
मूलार्णं कोटिधावृत्य तस्मात्पापात्प्रमुच्यते ।
तुलस्यास्तु परित्यागो हरेरपि गुरोरपि ॥ ६५ ॥
नरकान्ते गण्डमाली जायते च मुखेभगम् ।
नृपैर्हन्यो द्विजैस्त्याज्यस्तुलसीस्रक्निषेधकः ॥ ६६ ॥
गङ्गास्नानरतो नित्यं हरेरपि च पूजकः ।
तुलसीधारिणं निन्दन्न ज्ञेयः साधुसम्मतः ॥ ६७ ॥
यः समालङ्कृतो दाम्ना हरेर्नाम्नापि वा नरः ।
तत्कुलं यमनिर्मुक्तं विष्णुलोके महीयते ॥ ६८ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे तृतीयांशे
तुलसीमाहात्म्यवर्णनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

——०——

## पञ्चमोऽध्यायः ।

अथास्या धारणे स्थानप्रयोजनविधिक्रमान् ।
वक्ष्यामि निर्णयं तेषां पारम्पर्यक्रमागतम् ॥ १ ॥
कण्ठे शिरसि बाह्वोश्च कर्णयोः करयोर्हृदि ।
तुलसी धार्यते येन स ज्ञेयो विष्णुना समः ॥ २ ॥
शिखायां ब्रह्मरूपैकमापीडे सफलायुषः ।
वर्षाणां शतकं ज्ञेयं शास्त्रषट्कं च श्रोत्रयोः ॥ ३ ॥
वेदैः स्मृतिपुराणाभ्यां षड्भिस्त्रेधास्य संस्कृतिः ।
आकण्ठहृदयं तस्या अह्नां सार्थकता सदा ॥ ४ ॥
यज्ञसूत्राङ्गुलभुजां देवानां तन्मितन्द्रितम् (?) ।
दैहिकी मानसी शुद्धिः शेषं दोःकरयोर्युगे ॥ ५ ॥
त्रिधा त्रिधा त्रिलोक्यां वै कामचाराय दृश्यते ।
एवंप्रकारा विज्ञेया परेऽपि मुनिनोदिताः ॥ ६ ॥
सहस्रैकमितं चैव तुलस्या मणिका दधन् ।
साक्षाद्धरिर्भवेदत्र एवं तुलसिधारणे ॥ ७ ॥
धारयेत्सर्वदा कण्ठे करेऽपि च हरिं भजेत् ।
एकविंशतिधा धार्या सप्तत्रिकसुमालया ॥ ८ ॥
इत्येवं बहुधाख्यातं धारणं तुलसीस्रजः ।
आकारैः श्रीपतेरस्य अस्त्रैर्वा मणिकार्जुभिः ॥ ९ ॥
मणिश्चैको मूर्ध्नः कनकजटितः शेखरगतः ।
शतं षट्षट्श्रोत्राभरणयुगलेऽथो निजगले ॥
दधन् षड्भिस्त्रैधा श्रुतिभिरुदितानां त्रिशतकम् ।
हरिः स्याद् वृन्दाया भुजकरयुगे षट्शतमितम् ॥ १० ॥

अथैका चैकविंशत्या माला परमपावनी ।
सर्वासामपि मालानां तुलसीमालिका वरा ॥ ११ ॥
मणिकानां सहस्रैस्तु माला कार्या महीयसी ।
तथा जपेद्धरेर्मन्त्रं प्रीणातु पातु जगद्गुरुम् ॥ १२ ॥
सुवर्णमणिकाष्ठानां फलानां प्राणिनामपि ।
मालापञ्चैव संक्षेपात्तासु काश्चिद्वराः स्मृताः ॥ १३ ॥
हेम्नो माला सुवर्णेषु सर्वास्ता मणिजातिषु ।
काष्ठेषु च पटीरस्य कदम्बस्य कुशस्य च ॥ १४ ॥
पुण्यद्रुमाणां चान्येषां तीर्थजानामुदाहृता ।
तुलसीकाष्ठमाला तु भक्तिरूपा न काष्ठजा ॥ १५ ॥
यथैव जाह्नवीतोयं यथा देवो जनार्द्दनः ।
नरा वेदविदो विप्रास्तथैव तुलसीद्रुमम् ॥ १६ ॥
यो गृह्णाति न काष्ठेषु तुलसीं जाह्नवीं जले ।
गुरुं चापि नरेष्वस्य पुण्यं कुञ्जरशौचवत् ॥ १७ ॥
पवित्रा मालिका विष्णोः प्रिया भक्तिस्वरूपिणी ।
श्रुतिस्मृतिसदाचारपरैर्धार्या सदैव सा ॥ १८ ॥
मालायुग्मं तथा कण्ठे स्निग्धं सूक्ष्मतमं वहेत् ।
करमाला जपे धार्या अन्यास्ताः पुण्यकर्मणि ॥ १९ ॥
तुलसीदलजा माला धात्री फलकृता ह्यपि ।
शुचिकाले तु संधार्या पुण्यकाले विशेषतः ॥ २० ॥
दाने श्राद्धे च पूजायां अवश्यं तुलसीदलम् ।
वृथा दानं वृथा श्राद्धं वृथा पूजा च तां विना ॥ २१ ॥
तुलस्या सहितं दत्तं तच्छ्रीकृष्णस्य तुष्टये ।
तुलस्या सहितं दानं तद्दानं च सुखाप्तये ॥ २२ ॥
सुवर्णगुम्फितां मालां मणिभिः सङ्कलीकृताम् ।
ददाति यो द्विजाग्रेभ्यः स चिरायुः सुखी भवेत् ॥ २३ ॥

तुलसीदलसंयुक्तं दानं सर्वं प्रशस्यते ।
तुलसीमालया युक्तस्ततः पात्रतमो मतः ॥ २४ ॥
दत्तानेन मही कृत्स्ना सुवर्णमणिसंकुला ।
तुलसी काष्ठमाला हि येन दत्ता द्विजातये ॥ २५ ॥
तुलसी तु सदाभ्यर्च्या कार्तिके तु विशेषतः ।
वृन्दाया एव मासोऽसौ राधादामोदरप्रियः ॥ २६ ॥
येन प्रमादतो मौढ्यात्स्वधर्मज्ञानतोऽपि वा ।
न धारिता येन वृन्दाऽसौ द्राक् सम्प्रार्थ्य धारयेत् ॥ २७ ॥
जीवपोतकरुद्राक्षधात्रीणां फलजा वराः ।
पुत्रवित्तैषणालोकैषणानां साधकाश्च ताः ॥ २८ ॥
प्राणिजासु च दन्तघ्ना करे करभवा तथा ।
करमालैव निष्कामा वैदिकी सहजस्थिता ॥ २९ ॥
यस्य गेहे न तुलसी शालग्रामो न गौर्हरेः ।
शाखं भक्ताश्च तद्गेहं फेरुराजगृहोपमम् ॥ ३० ॥
तुलसीकाष्ठमालाभिर्भूषितो वाचयेत्कथाम् ।
उपदेशस्तस्य ग्राह्योधर्ममूलं च दृश्यते ॥ ३१ ॥
तुलसीकाष्ठमालाभिर्भूषितो व्रतमादिशेत् ।
व्रतं ग्राह्यं तथा भूत्वा मखे चापि तथा विधिः ॥ ३२ ॥
तिर्यक्पुण्ड्रं भस्मनोर्ध्वपुण्ड्रं गोपीमृदा भवेत् ।
श्रीशप्रसादवृन्दामृत्पुण्ड्रं सर्वत्र कीर्तितम् ॥ ३३ ॥
वटोर्ब्रह्मद्रुदण्डं च यतेर्वेणुभवं तथा ।
सर्वेषां तुलसीदण्डं कण्ठे धार्यं करेऽपि वा ॥ ३४ ॥
वसेद्वृन्दावने रम्ये विष्णुव्रतपरायणः ।
तारयेत्सकलं विश्वं किं पुनः स्वकुलं न हि ॥ ३५ ॥
प्रचरन्ति च यद्राष्ट्रे पुरे वा मन्दिराजिरे ।
राजानं तारयन्त्येते तुलसीकाष्ठधारिणः ॥ ३६ ॥

राज्यासनं समासाद्य वृन्दादाम दधेद्गले।
तस्यैव पापं न प्रोक्तमन्यथा नरकं ध्रुवम् ॥ ३७ ॥
यं धृत्वा द्रुहिणोऽस्राक्षील्लोकान्पुण्यमयान् सुरान्।
विमुच्यैव तु पापिष्ठानसुरान्स ससर्ज ह ॥ ३८ ॥
रुद्रस्तुलसिमाश्रित्य हरेः साम्यं समाश्रितः।
तस्याः कवचसंनद्धः स्कन्दो जिग्ये सतारकान् ॥ ३९ ॥
तारकस्य वधार्थं तु शिवेन तनयो गुहः।
भूषितस्तुलसीकाष्ठैर्माहात्म्यं प्रकटीकृतम् ॥ ४० ॥
येचोर्ध्वपुण्ड्रतिलकास्तुलसीकाष्ठधारिणः।
श्रीमन्नारायणपरास्ते शैवाः शिवसंस्तुताः ॥ ४१ ॥
येऽर्चन्ति परमं विष्णुं शङ्खचक्रादिचिह्निताः।
ते शैवा वैष्णवास्ते च गोपीचन्दनचर्चिताः ॥ ४२ ॥
येषु प्रसीदति हरिर्जगदात्मा सनातनः।
तेषु प्रसीदति हरो ब्रह्मेन्द्रप्रमुखैः सुरैः ॥ ४३ ॥
तुलसी त्रिविधा प्रोक्ता श्यामा श्वेता वनोद्भवा।
कृष्णा श्रीकृष्णभार्यायाः श्रीहरेः प्राणवल्लभा ॥ ४४ ॥
कृष्णा सा पार्वती भूता शुक्ला विष्णुभवा शुभा।
उभयोः संगमं श्रेष्ठं कृष्णा प्रियतमा हरेः ॥ ४५ ॥
कृष्णा कृष्णैकसंधार्या नान्यकर्मणि चोदिता।
शुक्ला चारण्यसंभूता सर्वकर्मणि सा शुभा ॥ ४६ ॥
माभवा मालती प्रोक्ता गौरी भूततमी मता।
धात्रीजामलकी पुण्या स्तिस्रो विष्णोः प्रिया इमाः ॥ ४७ ॥
ये निन्दन्ति जना एतास्ते पापाः पापनिष्ठया।
न तेषां मुखमालोक्यं न श्रद्धेयं वचस्तथा ॥ ४८ ॥
आराधिता पुरा गौर्या ददौ बीजं स्वकं तदा।
ततो भूमितले प्राप्ता गौरी भूततमी मता ॥ ४९ ॥

श्वेतामृतरसैः सिक्ता पार्वत्या ह्यतिपावनी ।
दत्ता या हरिणा पूर्वं पार्वत्यै प्रयतात्मना ॥ ५० ॥
वनोद्भवा तु देवेभ्यो या दत्ता सिन्धुमन्थने ।
हालाहलविषज्वालां यतः सेहे महेश्वरः ॥ ५१ ॥
शिरसो धारणान्मोक्षः कीर्तिर्लोके तु कर्णयोः ।
कण्ठे धृत्वा हरेर्लोकं हृदि बाह्वोः स्ववाञ्छितम् ॥ ५२ ॥
यस्या संधारणात्सद्यः क्षीणतां याति पातकम् ।
पूतं भवति तद्गात्रं पात्रतामपि गच्छति ॥ ५३ ॥
त्रुटितां मलसंदिग्धां लिप्तां वाशुचिवस्तुभिः ।
विमलीकृत्य संधार्या तदन्या वापि तत्क्षणे ॥ ५४ ॥
शावशुद्धौ रजःशुद्धौ प्रायश्चित्तं ह्युपक्रमेत् ।
उपरागादिशुद्धौ च शुद्धां वापि परा दधेत् ॥ ५५ ॥
मृत्युकाले तु सावश्यं धार्या मृत्युः पदे पदे ।
तस्मात्सदैव संधार्या तुलसीकाष्ठमालिका ॥ ५६ ॥
कारागारे निरुद्धोऽपि आघाते वा नियोजितः ।
अभक्ष्यभक्षणे चापि गवादिपशुहिंसने ॥ ५७ ॥
म्लेच्छैर्दास्ये नियुक्तो वा व्याधैर्वापि विपाटितः ।
न जह्यात्तुलसीमालां प्राणैरपि गरीयसीम् ॥ ५८ ॥
विघ्नभूतानि चात्यर्थं कामतो वा सुरां पिबन् ।
अगम्यागमनं कुर्वन् न लिप्येत्सुरसाश्रितः ॥ ५९ ॥
मूत्रोत्सर्गे मलोत्सर्गे कुर्याद्रागविषार्तिगः ।
कर्णे वापि दधेद्वामे ऋतौ पृष्ठावलम्बिनीम् ॥ ६० ॥
कदापि च कथंचिद्वै न संत्याज्या महात्मभिः ।
तां त्यजन् दीयते धर्मात् गुरुद्रोही भवेद् ध्रुवम् ॥ ६१ ॥
सुरसाऽऽरण्यसंभूता परमा पावनी मता ।
यस्याः प्रसङ्गमात्रेण पुण्डरीकोऽप्यगाद्दिवम् ॥ ६२ ॥

पुण्डरीकाभिधो व्याधस्तुलसीवनमाश्रितः।
चकार मृगयां नित्यं लुब्धो हिंसाविहारवान् ॥ ६३ ॥
एकदा जलपानार्थं तत्र व्याघ्रः समागतः।
जघान तं स बाणेन तं जघान स संगतः ॥ ६४ ॥
यमदूतान्निवार्यैव विष्णुदूतैः समुद्धृतः।
मांसानां भक्षको हिंसाविहारोऽप्यशुचिः कुधीः ॥ ६५ ॥
तुलसीकाष्ठसङ्गेन व्याधः प्राप्तो हरेः पदम्।
किं पुनः श्रद्धया वृन्दां धारयेद्यः सदा नरः ॥ ६६ ॥
गर्भे प्रसूतौ विधृता वैष्णवं जनयेत्सुतम्।
मृत्युकाले धृता चैव वैष्णवं नयते पदम् ॥ ६७ ॥
रक्षार्थं सर्वलोकानामियं देवेन निर्मिता।
एतस्या धारणादत्र अपमृत्युर्न जायते ॥ ६८ ॥
महारोगा विनश्यन्ति पुत्रवित्तादिकं लभेत्।
भूतप्रेतग्रहादिभ्यो बालानां रक्षणं भवेत् ॥ ६९ ॥
नराणां चैव नारीणां कृत्यादिभयहृत्परम्।
सर्वसद्गुणमाहात्म्यं तुलसीकाष्ठधारणे ॥ ७० ॥
यथैव पूजनं विष्णोः यथैवातिथिपूजनम्।
तथैव तुलसीकाष्ठधारणं पुण्यकारणम् ॥ ७१ ॥
यो दद्यात्तुलसीकाष्ठं विप्राय हरिसेविने।
ब्रह्माण्डशतकोटीनां दानस्य फलमश्नुते ॥ ७२ ॥
तुलसीकाष्ठमालां यो दद्याद्धेम्नापि संयुताम्।
लक्ष्मीनारायणं देवं स करोति वशं ध्रुवम् ॥ ७३ ॥
यथा सुवर्णं पद्माया रुद्राक्षो वा महेशितुः।
तथैव तुलसीकाष्ठं हरेर्विश्वात्मनः प्रियम् ॥ ७४ ॥
गौरीभूः तुलसी प्रोक्ता हिरण्यं हरवीर्यजम्।
तयोस्तु सङ्गमं यत्र तत्र मुक्तिपदं स्वयम् ॥ ७५ ॥

तुलस्यां वसते विष्णुः कनके तु रमेश्वरी ।
तस्मात्सुवर्णसंयुक्ता मालिका सर्वकामदा ॥ ७६ ॥
पुत्रदा वित्तदा चापि आयुरारोग्यदा सदा ।
सुवर्णग्रथिता माला योषित्सौभाग्यदायिनी ॥ ७७ ॥
सुवर्णमणिभूषाभिः तुलसीमालिका शुभा ।
साम्राज्यकामो विभृयात्तथा सौभाग्यकामुका ॥ ७८ ॥
हरगौरीमयी ह्येषा तौ यथा श्रीहरेः प्रियौ ।
तथैव वल्लभा विष्णोर्धार्या वै वशमिच्छुभिः ॥ ७६ ॥
द्वादशैः सप्तविंशत्या चतुर्भिश्च शतार्द्धकैः ।
अष्टोत्तरशतैर्माला मणिकैर्विजये मता ॥ ८० ॥
तुलसीमालया जप्तं तज्जप्तं हरिसन्निधौ ।
हरेस्तु सन्निधौ जप्तं तदनन्तफलप्रदम् ॥ ८१ ॥
सर्वासामेव मालानां रुद्राक्षादिभुवामियम् ।
तुलसीमालिका श्रेष्ठा निर्गुणा मोक्षदायिका ॥ ८२ ॥
शेषः सहस्रवदनैर्यस्या माहात्म्यमीरयन् ।
स पश्यति नो पारं वेदे वृन्दा हरेः प्रिया ॥ ८३ ॥
इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे तृतीयांशे तुलसीमालामाहात्म्यवर्णनं नाम पञ्चमोऽध्यायः ॥ ५ ॥

—:o:—

## षष्ठोऽध्यायः ।

शाण्डिल्य उवाच—

अथ वैष्णवमुद्राणां धारणस्य च गौरवम् ।

श्रुतिस्मृतिपुराणैश्च आगमैरुक्तमुच्यते ॥ १ ॥
शङ्खचक्रगदापद्मनाममुद्रेति पञ्चकम्।
नाममुद्रा द्विधा तत्र तदा षट्कं प्रकीर्तितम् ॥ २ ॥
मुद्रास्तत्र द्विधा शीतला तथा तापिताग्निना।
शीतला ह्युपदेशादौ तप्ता दीक्षासु कथ्यते ॥ ३ ॥
तथापि श्रौतनिष्ठस्य वैष्णवस्य तु शीतला।
श्रौततन्त्रप्रसक्तस्य द्विजातेरपि तापिता ॥ ४ ॥
शीतला द्विविधा तत्र चक्रतीर्थमृदादिना।
तथा तीर्थमृदा चान्या मृदैवेति च तां विदुः ॥ ५ ॥
गोपीचन्दनमृत्स्ना तु न मृत्स्ना चन्दनात्मिका।
तथा तीर्थमृदा चान्या मृदैवेति च तां विदुः (?)॥ ६ ॥
गोपीचन्दनमृत्स्ना तु न मृत्स्ना चन्दनात्मिका (?)।
तीर्थमृत्स्ना तथा ज्ञेया विष्णुपादाब्जसंयुता ॥ ७ ॥
तुलसीमूलभूश्चैका गङ्गातीरसमुद्भवा।
माथुरे मण्डले मृत्स्ना सा मृत्स्ना ब्रह्मरूपिणी ॥ ८ ॥
तीर्थाभावे तु सा सेव्या सर्वदोषापनुत्तये।
याऽङ्गलग्ना पुनात्येव स्वयं च स्पृष्टिनं ह्यपि ॥ ९ ॥
घ्राणेन नयनेनापि मुखेनापि च रोमभिः।
प्रविष्टा कर्णरन्ध्रेण ददाति परमां गतिम् ॥ १० ॥
तीर्थाभिषिक्ता या मृत्स्ना सापि ज्ञेया तथाविधा।
तापोऽपि द्विविधस्तत्र शास्त्रप्रोक्तः स भूसुरैः ॥ ११ ॥
स्थानप्रोक्तस्तथान्येषां ज्ञेयश्चावरजन्मनाम्।
दैवे च पैतृके चापि येषां नास्त्यधिकारिता ॥ १२ ॥
तेषां तापस्तत्र ज्ञेय इति सद्भिर्विनिश्चितम्।
सर्वः तापसस्तप्ताङ्कैर्दीक्षयैव महात्मनाम् ॥ १३ ॥
शङ्खचक्रे मृदा यस्तु कुर्यात्तप्तायसेन वा।

स शूद्रवद्बहिष्कार्यो ह्यनर्हः श्रौतकर्मणि ॥ १४ ॥
एवंविधानां वचसां वैधं विषयं भवेत् ।
मृत्केवला निषिद्धास्यान्न तु सच्चक्रतीर्थमृत् ॥ १५ ॥
हर्यात्मनां न वै तापो दूषितः पाञ्चरात्रिकः ।
अन्यद्विजन्मनां नार्ह इति सर्वत्र सिद्ध्यति ॥ १६ ॥
शङ्खचक्राङ्किताः शुद्धा हरेः पूजादिकर्मणि ।
ते वैष्णवाः सदा मान्याः पूजातीर्थेषु भूसुराः ॥ १७ ॥
गोपीचन्दनमृत्स्नाभिर्दधेत् कृष्णायुधानि यः ।
कृष्णायुधैर्विना दध्याद्व भूषणानि सुवर्णकैः ॥ १८ ॥
स पूजाफलमाप्नोति पूजयन्वाप्यपूजयन् ।
बालानां चैव दाराणां धार्याण्याह पराशरः ॥ १९ ॥
यो धारयति कृष्णस्य प्रसादं वायुधं नरः ।
न तं स्पृशन्ति पापानि पद्मपत्रं जलं यथा ॥ २० ॥
श्रीकृष्णनाममुद्राभिर्लाञ्छितो यस्य विग्रहः ।
संयुक्तः पुण्यमालाभिः स मुक्तो यमशासनात् ॥ २१ ॥
सौभाग्यचिह्नं नारीणां दासानां दासचिह्नवत् ।
भृत्यानां च तथा राजचिह्नं स्वं वाश्रमे यथा ॥ २२ ॥
वैष्णवानां तथा धार्यं पुण्यचिह्नं मधुद्विषः ।
अन्येषामपि तद्भक्तस्तत्तच्चिन्हं निजेशितुः ॥ २३ ॥
गृहोपकरणं सर्वं पशुदासादिकं तथा ।
मुद्रयेच्छङ्खचक्राभ्यां कुर्वन्नाम च वैष्णवम् ॥ २४ ॥
न मुद्रयेदासनानि शयनानि महीतलम् ।
क्षेत्रादिमध्ये संस्थाप्या शिला चक्रादिलाञ्छिता ॥ २५ ॥
यत्किंचित्स्वोपकरणं हरेः संस्मारकं भवेत् ।
यथा विधेयं सर्वत्र इत्येवं परमार्थता ॥ २६ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे तृतीयांशे वैष्णवमुद्राधारणगौरवं नाम षष्ठोऽध्यायः ॥ ६ ॥

———*———

## सप्तमोऽध्यायः।

शाण्डिल्य उवाच—

अथ पुण्ड्रस्य माहात्म्यं वैष्णवस्य निबोधत।
धार्यं शिरसि सर्वेषामिति प्राह श्रुतिःस्मृतिः॥ १॥
अन्येषामपि पुण्ड्राणां महिमोपाधितः स्मृतः।
ऊर्ध्वपुण्ड्रस्य माहात्म्यं सर्वेषां निरुपाधिकम्॥ २॥
तैतिरीया जगुश्चोर्ध्वपुण्ड्रं वै श्रौतभस्मना।
व्रताङ्गं च मुखाङ्गं च बटोश्च गृहिणस्तथा॥ ३॥
कृत्वैकं मस्तके पुण्ड्रं सर्वं सत्कर्म चाचरेत्।
तदभावे वृथा कर्म पातकं चापि विन्दति॥ ४॥
श्रौतस्मार्तक्रियाङ्गं तु ऊर्ध्वपुण्ड्रं प्रकीर्तितम्।
तान्त्रिके निजदैवत्यं यथाकार्यं च तत्र वै॥ ५॥
ब्राह्मणस्योर्ध्वपुण्ड्रं तु वैष्णवस्य विशेषतः।
निर्गुणोपासनेष्वत्र शैवशाक्तादिकेष्वपि॥ ६॥
पञ्चवर्षं समारभ्य अथवा गर्भसंस्कृतैः।
यावज्जीवं देहभावेऽप्यूर्ध्वपुण्ड्रं विधीयते॥ ७॥
पितृस्थानं गतानां तु ब्राह्मणानामुदाहृतम्।
पराशरेण तत्प्रोक्तं व्यासेन ब्रह्मणापि च॥ ८॥
ऊर्ध्वपुण्ड्रं सदा धार्यं सर्वज्ञानामियं श्रुतिः।
प्राह ऋक् तैतिरीयाश्च प्राहुराथर्वयाजुषाः॥ ९॥
सामगाश्चापि यं प्राहुः कोर्ध्वपुण्ड्रं न शंसति।
श्रुतिस्मृतिपुराणेभ्यः सदाचारान्महात्मनाम्॥ १०॥
प्राप्तं सदैवोर्ध्वपुण्ड्रं त्यजन्नरकमेति सः।

ऊर्ध्वपुण्ड्रं स्रजं मुद्रां गोविन्दं यः परित्यजेत् ॥ ११ ॥
तं राजा राष्ट्रतो बाह्यं कुर्याद्वेदद्रुहं खलम् ।
निर्गुणं सात्त्विकं चापि ऊर्ध्वपुण्ड्रं श्रुतिर्जगौ ॥ १२ ॥
राजसं तिलकं चान्यं भस्म तिर्यक् तु तामसम् ।
ऊर्ध्वपुण्ड्रधरं नत्वा गङ्गास्नानफलं लभेत् ॥ १३ ॥
ऊर्ध्वपुण्ड्रधरं दृष्ट्वा विष्णुदर्शनजं फलम् ।
दत्त्वा तस्मै धान्यमात्रं मेरुकोटिफलं लभेत् ॥ १४ ॥
उपकृत्य महात्मानमूर्ध्वं पुण्ड्रधरं जनम् ।
सर्वपापविनिर्मुक्तः सुखमत्यन्तमश्नुते ॥ १५ ॥
ये खलाश्च सुरा दुष्टास्ते विनिन्द्योर्ध्वपुण्ड्रकम् ।
पुण्ड्रान्तराणि कुर्वन्ति ततो यान्त्यधमां गतिम् ॥ १६ ॥
एकतः सर्वपुण्ड्राणि ऊर्ध्वपुण्ड्रं तथैकतः ।
तस्मात्सदैव संधार्यमूर्ध्वपुण्ड्रं हरेः प्रियम् ॥ १७ ॥
एकलं चोर्ध्वपुण्ड्रं वै पुनाति दधतो जनान् ।
परेण सहितः हन्ति दशपूर्वान् दशापरान् ॥ १८ ॥
पुण्ड्रान्तरेण सहितं धारयेन्न तु सर्वथा ।
पुण्ड्रान्तरेण दुष्टं स्याद्गङ्गाम्भःसुरया यथा ॥ १९ ॥
ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं वा न सहैव तथा चरेत् ।
यस्योपपत्तिं गायन्ती नारी सद्यो विनश्यति ॥ २० ॥
स्वाभाविकं चोर्ध्वपुण्ड्रं सतामत्र प्रकीर्तितम् ।
विहाय चापरं पुण्ड्रं कुर्वन् विन्दति कश्मलम् ॥ २१ ॥
ऊर्ध्वपुण्ड्रे त्रिपुण्ड्रं च त्रिपुण्ड्रे चोर्ध्वपुण्ड्रकम् ।
न चैवोभयथा शस्तं वैष्णवानां द्विजन्मनाम् ॥ २२ ॥
एको देवः सदा ध्येयः केशवो वा शिवोऽपि वा ।
एकं पुण्ड्रं सदा कार्यं ऊर्ध्वं वापि त्रिपुण्ड्रकम् ॥ २३ ॥
ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं च शस्तं स्याद् धार्यभूषणे ।

ऊर्ध्वपुण्ड्रं भ्रुवोर्मध्ये त्रिपुण्ड्रं पार्श्वयोस्तयोः ॥ २४ ॥
पुण्ड्ररेखा इति प्रोक्तं तिर्यक्तत्रापि दूषितम्।
शैवे शाक्ते च तच्छस्तं वैष्णवे वैदिके न वै ॥ २५ ॥
वैष्णवे वैदिकेऽन्यत्र सामान्ये पुण्यकर्मणि।
अवश्यमूर्ध्वपुण्ड्रं स्यान्निष्कामे सर्वदैव तु ॥ २६ ॥
ऊर्ध्वपुण्ड्रस्य माहात्म्ये श्रद्धा नास्ति दुरात्मनाम्।
ऊर्ध्वपुण्ड्रस्य माहात्म्ये देवानां जायते मतिः ॥ २७ ॥
किमत्र बहुनोक्तेन धार्यं धार्यं प्रयत्नतः।
ऊर्ध्वपुण्ड्रं सदा शुद्धं दैवे पित्र्ये विशेषतः ॥ २८ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे ऊर्ध्वपुण्ड्र-विधिमाहात्म्यवर्णनं नाम सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः।

शाण्डिल्य उवाच—

पादोदकं हरेः पेयं पूजान्तेऽपि दिने दिने।
सर्वतीर्थसमं तद्धि प्राह बौधायनश्रुतिः ॥ १ ॥
तिस्रः कोट्योऽर्द्धकोटी च तीर्थानां वायुरब्रवीत्।
सप्तकोट्यो महामन्त्राः शिवेन परिभाषिताः ॥ २ ॥
त्रयस्त्रिंशत्कोटयश्च सुराणां याजुषोदिताः।
पुण्यकालस्तथा चान्ये पुण्यौषधिलता द्रुमाः ॥ ३ ॥
पुण्याक्षराणि वेदानां दानानां पुण्यपङ्क्तयः।
गोब्राह्मणेषु वर्णेषु यज्ञेषु स्वाश्रमेषु च ॥ ४ ॥

महात्मसु महेशेषु सुयोगीशेषु यत्कचित् ।
सुकृतं तच्च सकलं श्रीमत्पादोदकं हरेः ॥ ५ ॥
हरिपादाब्जसम्भूतवारिणा शुचयो जनाः ।
हरिपादाब्जसम्भूतजाह्नव्या पावितं जगत् ॥ ६ ॥
शिवोऽपि शिवतां यातस्ततः किमपरं शुचिः
बहवः पाविता यस्माद्दत्तशापसमुद्भवे ॥ ७ ॥
उदकं चन्दनं चक्रं शङ्खं च तुलसीजलम् ।
घण्टाश्वचाशिलाताम्रं नवभिश्चरणोदकम् ॥ ८ ॥
मूर्त्या वा शिलया वापि भवेत्केवलयापि तत् ।
विधिनार्चितया वाप्यविधिनार्चितयापि वा ॥ ९ ॥
पात्रेणैव पिबेत्तीर्थं भूमौ तन्नैव पातयेत् ।
अशुचिर्वा शुचिर्वापि पीत्वा शिरसि वन्दयेत् ॥ १० ॥
हरिपादाब्जतीर्थेन सर्वं ग्राह्यं च संस्कृतम् ।
तद्धिशुध्यति वै शीघ्रं नान्यथा वस्तुशोधनम् ॥ ११ ॥
यः कश्चिन्महिमा सिद्धो गङ्गाम्भसि जगुर्गिरः ।
स सर्वं श्रीमुरभिदश्चरणाब्जभवः स्मृतः ॥ १२ ॥
हरेः पादुयुगं ब्रह्म ब्रह्माक्षरमयं जलम् ।
जाह्नव्या जगदीशस्य तद्धि पादोदकं स्मृतम् ॥ १३ ॥
उरुक्रमस्य पादाब्जपाथो यो न पिबेन्नरः ।
विष्णोर्लोकं स न वसेदिति ऋक् शाश्वती श्रुता ॥ १४ ॥
सर्वज्ञानां श्रुतिः शास्त्रे पेयं पादोदकं हरेः ।
यः पिबन्न पुनस्तन्यं मातुः स पिबति क्वचित् ॥ १५ ॥
तदनादरणात्सद्यो जायते पतितोऽधमः ।
तस्मात्सदैव सम्पेयं सर्वरोगनिवारणम् ॥ १६ ॥
हरेः पादोदकालाभे न भोक्तव्यं कथंचन ।
हरेः पादोदकलाभे क्रीडितव्यं गतत्रपैः ॥ १७ ॥

तुलसीदलमिश्रं च पीत्वा पादोदकं हरेः।
अद्य नो लभ्यते कस्मात्किं मेऽघमिति चिन्तयेत् ॥ १८ ॥
नित्यं समर्चनीयोऽसौ श्रीहरिर्द्विजसत्तमैः।
ततः पादोदकं पेयं इत्येषा वैदिकी श्रुतिः ॥ १९ ॥
विधवाभिर्व्रतस्थैश्च सन्यस्तैर्वैष्णवैरपि।
पेयं पादोदकं नित्यमित्येषा वैदिकी श्रुतिः ॥ २० ॥
यत्पानाच्छुद्धिमाप्नोति बुद्धिः पापान्निवर्तते।
अविद्या क्षीयते तस्मात् पेयं पादोदकं हरेः ॥ २१ ॥
ब्रह्महत्यादिपापानि कुर्वन्नपि च मानवः।
हरेः पादोदकं पीत्वा लिप्यते नेति निश्चितम् ॥ २२ ॥
गङ्गावारि मनोहारि पापहारि मधुद्विषः।
चरणाम्बुभवं तीर्थं सर्वतीर्थवरं मतम् ॥ २३ ॥
जगदानन्दकन्दस्य गोविन्दस्य पदाम्बुजम्।
निस्रुतं जाह्नवीतोयं सर्वेषां पावनं हितम् ॥ २४ ॥
श्राद्धेषु शुद्धिकार्येषु प्रायश्चित्तेषु निश्चयात्।
पादोदकं प्रयोक्तव्यं नान्यथा शुद्धिरुत्तमा ॥ २५ ॥
पादोदकस्य संपर्कात् पुण्यं कोटिगुणं भवेत्।
पापमूलानि नश्यन्ति इत्येषा परमा स्थितिः ॥ २६ ॥
अलाभे विष्णुतीर्थस्य तीर्थमृत्स्ना प्रशस्यते।
विष्णुतीर्थाम्बुसक्तैव ग्राह्या मृदात्मशुद्धये ॥ २७ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे तृतीयांशे हरिचरणोदकमाहात्म्यवर्णनं नाम अष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः ।

अथ श्रीशप्रसादस्य माहात्म्यं श्रुतिसम्मतम् ।
निरूप्यते मुनिश्रेष्ठा यमश्नन्ति महेश्वराः ॥ १ ॥
हरेर्भुक्तं प्रसादं स्यान्नैवेद्यं देवतान्तरैः ।
रुद्रभुक्तं तु निर्माल्यमित्येवं श्रुतिनिर्णयः ॥ २ ॥
सम्पूज्य देवदेवेशं पाकं सम्यक् निवेद्य च ।
विधाय मराडपं स्तुत्वा दत्त्वाचमनमुद्धरेत् ॥ ३ ॥
पूजाशेषं समाप्यैव रुद्रादिभ्यो विभज्य च ।
कृत्वा सन्ध्याह्निकं ग्राह्यं प्रसादं जगदीशतुः ॥ ४ ॥
विभज्यैव तु नैवेद्यं ग्राह्यं तदधिकारिषु ।
अन्यथा रौरवं याति यथा स्तेनस्तथैव सः ॥ ५ ॥
भक्तेभ्यो नार्पितं यावद्देवस्वं तावदेव तत् ।
अग्राह्यं च ततो दत्त्वा दत्त्वा भक्ते महत्फलम् ॥ ६ ॥
प्रसादं जगदीशस्य सदा शुद्धं प्रकीर्तितम् ।
तुलसीदलसंमिश्रं नियुञ्जीत नेतरत् ॥ ७ ॥
इतरद्भुञ्जतां पापं प्राहैवं यजुषां श्रुतिः ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यचिद्धनम् ॥ ८ ॥
प्रसादो जगदीशस्य न दुष्यति कथञ्चन ।
शुना भुक्तोऽपि संग्राह्यो देवानामपि दुर्लभः ॥ ९ ॥
यं शिवाद्याः समश्नन्ति विहायान्यं सुसद्गुणम् ।
समर्पितं स्वभक्तैर्हि वैष्णवानां गृहे गृहे ॥ १० ॥
पुरुषोत्तमसत्क्षेत्रे महिमास्य महत्तरः ।
अन्यत्र तादृग् विज्ञेयो यदि भक्तिः सुपुष्कला ॥ ११ ॥

न ज्ञातिव्यवहारोऽत्र न कार्यश्च व्रताग्रहः ।
पथ्यापथ्यकथा त्याज्या भक्ष्ये नास्ति विधिक्रमः ॥ १२ ॥
स्वाद्वस्वादुकथा हेया शौचाशौचकथा तथा ।
ग्राह्याग्राह्यकथां मुक्त्वा देयादेयकथां हरेत् ॥ १३ ॥
शुद्धं स्वादु परं दिव्यं पुण्यं ब्रह्मादिदुर्लभम् ।
गोविन्दभुक्तशेषं मे भाग्याल्लब्धं कुतोऽधुना ॥ १४ ॥
इत्युत्सवे समानीय हृदये चातिमोदतः ।
भूयः प्रणम्य गोविन्दं तं प्रयुञ्जीत नित्यशः ॥ १५ ॥
ये न भुञ्जन्ति गोविन्दभुक्तशेषं दुराग्रहाः ।
तेषां संसारविच्छित्तिर्नैव दृष्टा मुनीश्वराः ॥ १६ ॥
संसारसर्पदष्टानामेतद्भैषज्यमुत्तमम् ।
गोविन्दभुक्तिसंभुक्तिः पेयं पीत्वावशेषकम् ॥ १७ ॥
महापापोपपापानां नाशनं मुक्तिदायकम् ।
दिव्यलीलाशरीरस्य हेतुभूतं सुधामयम् ॥ १८ ॥
देवाः सर्वे समश्नन्ति ध्रुवं भुक्तं हरेरिह ।
शिवस्तत्र विशेषेण तस्मै देयं ततो ध्रुवम् ॥ १६ ॥
यज्ञो विष्णुरिति ख्यातो यज्ञोच्छिष्टं शिवोऽग्रहीत् ।
देवास्तमुपजीवन्ति ब्राह्मणाश्च तपोधनाः ॥ २० ॥
सर्वज्ञानां श्रुतिः प्राह विष्णुभक्तं हि भुञ्जताम् ।
विष्णुघ्रातं हि जिघ्रन्तु पिबन्तु विष्णुपीतकम् ॥ २१ ॥
विष्णुभुक्तं वैष्णवानां वैदिकानां द्विजन्मनाम् ।
अन्यदेवस्य भुक्तं हि स्वभक्तानां क्वचित्स्मृतम् ॥ २२ ॥
पुरा मन्नामकः कश्चिद्विप्रो माहात्म्यमस्य वै ।
अनुभूय व्रतं चक्रे नान्यद्भुङ्क्ते कदाचन ॥ २३ ॥
अवैदिकानां देवानां मद्यमांसभुजां स्फुटम् ।
मद्यमांससमं ज्ञेयं यच्चैतेभ्यो निवेदितम् ॥ २४ ॥

स्पृष्ट्वान्यदेवनिर्माल्यं सवासाः स्नानमाचरेत् ।
भुक्त्वा चान्द्रायणं कृच्छ्रं कामात्तु द्विगुणं चरेत् ॥ २५ ॥
विष्णोरनर्पितं भुक्त्वा कृच्छ्रं कुर्यादनापदि ।
संन्यस्तैर्विधवाभिश्च कार्यं चान्द्रायणत्रयम् ॥ २६ ॥
चान्द्रायणसहस्रस्य विष्णोर्नैवेद्यभक्षणे ।
फलं भवति पापघ्नमविद्याग्रन्थिनाशनम् ॥ २७ ॥
यो देवानपि भूदेवान् पितॄन् संन्यासिनो बटून् ।
भोजयेद्धरिभुक्तेन तस्य पुण्यमनन्तकम् ॥ २८ ॥
हरिभुक्तप्रसादेन श्राद्धं पिण्डांश्च यश्चरेत् ।
गयाश्राद्धफलं तस्य पितॄणां मुक्तिरुत्तमा ॥ २९ ॥
श्राद्धे यज्ञे तथा सत्रे दाने माने सुरार्चने ।
हरेः प्रसादं यद्द्रव्यं सर्वकर्मसु योजयेत् ॥ ३० ॥
भोज्यं पेयं तथा धार्यं गोविन्दोच्छिष्टमेव हि ।
दासव्रतमिदं विष्णोरविद्याग्रन्थिभेदनम् ॥ ३१ ॥
संसारं तर्तुमिच्छा चेत् भोज्यं गोविन्दभोजितम् ।
नित्ये नैमित्तिके काम्ये हरिभुक्तं द्विजन्मनाम् ॥ ३२ ॥
विभज्य सर्वैः संग्राह्यं प्रसादं सम्भवे हरेः ।
अविभज्य जुषन्यस्माच्छापमाप हरस्त्रियाः ॥ ३३ ॥
प्रमाणं नारदः प्राह यत्र स्वानुभवं ततः ।
श्रुतिस्मृतिपुराणाद्यैर्निश्चित्योक्तं द्विजन्मनाम् ॥ ३४ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे तृतीयांशे प्रसाद-
महिमावर्णनं नाम नवमोऽध्यायः ॥ ९ ॥

---

# दशमोऽध्यायः ।

शाण्डिल्य उवाच—

अथ द्वादशधा शुद्धिः पञ्चधापि निगद्यते ।
अपराधस्तथा विष्णोर्येन सिध्यन्ति सत्वरम् ॥ १ ॥
आत्मनो हि विहारार्थं पूर्णकामोऽपि सृष्टवान् ।
ततो हिता तस्य सेवा जनैः कार्या सदैव हि ॥ २ ॥
यस्य मायाकृताविद्या जीवानामास संसृतिः ।
तस्यात्मभावान्मुच्येत तं भजेत्तं वदेदपि ॥ ३ ॥
गुरोः सन्निधिमासाद्य तदुक्ताचारसारवित् ।
विद्या प्राप्ता भवेज्जन्म कृपयास्य विशुध्यति ॥ ४ ॥
शेषेण शेषतां याति क्लेशान्मुच्येत्समर्चनात् ।
अभ्यसन्नागमं विज्ञो भावयन् स्निह्यतेतराम् ॥ ५ ॥
पञ्चधैवं प्रपन्नस्य भवेत्सर्वात्मभावना ।
सर्वेन्द्रियाणां संयुक्तिर्विमुक्तिश्चापि मान्यतः ॥ ६ ॥
क्षेत्रोपसर्पणैर्विष्णोर्दर्शनत्वरयापि च ।
महतामनुयानैश्च पादशुद्धिः प्रदक्षिणैः ॥ ७ ॥
हरेः समर्हणार्थं च द्रव्योत्तमसमाहृतिः ।
पादसंवाहनाच्छुद्धिः करयोर्भजतां नृणाम् ॥ ८ ॥
विसर्गादिन्द्रियसंशुद्धिर्हर्षादुत्पुलकाङ्गता ।
गुणानां श्रवणे विष्णोर्भक्तानां वा समागमे ॥ ९ ॥
रतिर्विशुध्यते दास्ये तथा चात्मनि संयमे ।
स्तुतिभावेन विरहात्केषांचिन्नन्दनन्दने ॥ १० ॥
वाचां तदागमाभ्यासादथवा नामकीर्तनात् ।
भक्तैस्तस्य प्रियालापैः शुद्धिर्दीनोपकारतः ॥ ११ ॥

प्रसादाघ्राणहर्षाद्यैः स्वस्य घ्राणं विशुध्यति ।
भजतः शिरसो घ्राणाद्बालानामेव लालने ॥ १२ ॥
निरीक्षणादुत्सवानामङ्गप्रत्यङ्गयोरपि ।
भक्तानामपि शास्त्राणां नेत्रयोः शुद्धिरुत्तमा ॥ १३ ॥
तत्कथाश्रवणैर्नामश्रुतिभिः श्रीहरेर्गुरोः ।
श्रोत्रयोरुत्तमा शुद्धिर्भक्तानां गुणसंग्रहैः ॥ १४ ॥
हरेः सपरिवारस्य चिन्तनैः प्रेमसंप्लवैः ।
चेतसश्चिन्तिनाच्छुद्धिस्तच्छास्त्राणां च धारणैः ॥ १५ ॥
सेवयैव वचः शुद्धिः सैव स्यात्सार्वदैहिकी ।
भुक्तोपभोगैर्भक्तानां संस्पर्शैस्तीर्थसेवया ॥ १६ ॥
प्रणामैः श्रीपतेः प्रेम्णा शुद्धिर्धर्मतनोरिह ।
सेवयैव हरेर्बाह्या भावनाभिस्तथान्तरा ॥ १७ ॥
आत्मोपकारिका सेयं सर्वदा साक्षिगोचरे ।
साक्षिणि प्रेक्षिता तासां भावनानां भवान्तरे ॥ १८ ॥
तदर्थार्थतया चेह यथा देहो निरुध्यते ।
तथा प्रसार्यते तद्वद्भिसर्गैर्लघुतामितः ॥ १९ ॥
न साक्षादुपयोगोऽस्ति केषांचिदपि साक्षिणि ।
करावपि कृतिद्वारा चोपकुर्वन्ति किं पुनः ॥ २० ॥
कश्चोपयोगश्रोत्रादेरिन्द्रियस्य परात्मनः ।
निजोपकारिता तेन स्वोपयोगेन चिन्त्यताम् ॥ २१ ॥
लीलात्मविग्रहाणां तु सा भवेत्तु भवान्तरे ।
अर्चावतारे देवस्य स्वोपयुक्ता क्षणान्तरे ॥ २२ ॥
अथापराधा देवानां सन्ति वैकुण्ठवासिनाम् ।
यत्पादुकाभिर्यानैर्वा प्रवेशं स्वार्थमालये ॥ २३ ॥
स्वहेतुकक्रियारम्भः शयनाशयनोदितैः ।
निग्रहोऽनुग्रहो वापि कामक्रोधस्मरोद्भवैः ॥ २४ ॥

गोमध्यदूषणोत्पादे स्वान्तवैष्णवहानिषु।
अपमानं चातिमानं दर्शने प्रतिरोधनम्॥ २५॥
स्वकीयैश्च कुपुत्रैश्चाविनीतैश्च प्रवेशनम्।
आलस्योदासीनते च प्रमदाभावदर्शने॥ २६॥
याचनं वापि शुश्रूषा भृतकार्जनमेव च।
दीनेषु निर्दयत्वं च युक्त्यादीनामबोधनम्॥ २७॥
परनिन्दा निजस्तोत्रं देवानामपि हेलनम्।
शाकपाकजलादीनामशुद्धिकरणं तथा॥ २८॥
नीचकार्यसमारम्भो देवगुप्तिप्रकाशनम्।
प्रदर्शनमनर्हत्सु पाकपूजादिसाधने॥ २९॥
अश्लीलभाषणारोपभावनानां त्रिधा कृतिः।
दूषणं समयादीनामुत्तमासनसंस्थितिः॥ ३०॥
आरोहणं देवशिरो देशे पात्रावमाननम्।
भक्तानामपराधश्च प्रसादस्य तिरस्क्रिया॥ ३१॥
भज्यचिह्नपरित्यागश्चान्यदेवाङ्कधारणम्।
परदेवाश्रयश्चापि दूषणं श्रीगुरोरपि॥ ३२॥
दम्भार्थता क्रियारम्भे प्रौढाहङ्कारमात्मनः।
तूष्णीम्भावोऽपि सामर्थ्येऽपमृतौ श्रीहरेः क्षमा॥ ३३॥
अत्यर्थं हरिकार्येषु त्वरात्यागोऽपि लाघवे।
हरेर्निजव्रतत्यागो निजवर्णाश्रमोचितैः॥ ३४॥
कालादिप्रातिकूल्येन सपर्याणां समर्पणम्।
अन्यायादुपलब्धेन अनर्हेण समर्हणम्॥ ३५॥
शास्त्रतो लोकतश्चापि दूषितस्य नियोजनम्।
मार्जारमूषकादीनामुच्छिष्टस्य निवेदनम्॥ ३६॥
अस्पृष्टप्राणिसंदष्टस्पृष्टस्य संपरिष्कृतिः।
विभवेभ्योऽवहाराणां हरेः संकोचनं तथा॥ ३७॥

आतिथ्यस्य परित्यागो भोगे लम्पटतात्मनः।
गोविप्रातिथिदीनानां यतीनां भैक्ष्यलोपनम् ॥ ३८ ॥
गुरुमानाभिलाषाच्च द्रव्यादानं हरेर्गुरोः।
भक्तेषु समबुद्धिश्च प्रकाशे देवभावना ॥ ३९ ॥
निजाचारविलोपश्च पराचारसमाश्रयः।
अकाले दर्शनं विष्णोरप्रणामार्पणं तथा ॥ ४० ॥
साष्टाङ्गैकप्रणामेन भ्रमणं तच्च दूषितम्।
आत्मच्छायाभिघातश्च प्रजल्पः स्वाङ्गदर्शनम् ॥ ४१ ॥
पादप्रसारणं चाग्रे नीचाङ्गस्पर्शनं पुरः।
नीचकार्यप्रवृत्तिश्च व्यावृतिर्निजकर्मणः ॥ ४२ ॥
गुरोरग्रेऽननुज्ञातो दम्भाद्वा कार्यसत्कृतिः।
समयोल्लङ्घनं कार्येऽनाज्ञाया ज्ञापनं तथा ॥ ४३ ॥
परार्थं देवदेवस्य समयादिकृतिस्तथा।
देशकालर्तूत्सवानां प्रातिकृत्येन तर्पणम् ॥ ४४ ॥
देशकालभवानां च फलादीनामनर्पणम्।
नित्यनूत्नसमर्हाणामर्हणानामकल्पनम् ॥ ४५ ॥
स्वसामर्थ्यातिशयिनां कार्याणां चैव संभृतिः।
देवस्य वृत्तिहरणं अलङ्कारादिसंहृतिः ॥ ४६ ॥
तस्यैव वित्तहरणं तन्नाम्ना याचनं तथा।
हरणं शरणापन्नजनस्य भयशालिनः ॥ ४७ ॥
शरणागतसंत्यागो दुष्टानामभिरक्षणम्।
प्रसादे दूषणं चापि मर्यादायाश्च भञ्जनम् ॥ ४८ ॥
ग्रामारामधरादीनां तस्योद्वेजनमप्युत।
तत्सेवकानां संरोध अपमानं च धर्षणम् ॥ ४९ ॥
छेदनं चोपकाराणां विजयाङ्काभिमर्द्दनम्।
यात्रावरोधो देवस्य घटादौ शुष्कसंग्रहः ॥ ५० ॥

व्यवहारेऽन्यसाम्यं च रिक्तहस्तेन दर्शनम् ।
विलम्बो दर्शने काले प्रसादेऽनादरस्तथा ॥ ५१ ॥
इत्येवमादयो ज्ञेया लोकशास्त्रानुयुक्तिभिः ।
महादोषानितो वक्ष्ये यैः स्यादासुरता नृणाम् ॥ ५२ ॥
असाधुसङ्गमः साधोर्गुरोश्चापि न संश्रयः ।
प्रपत्तीनां परित्यागः कृतिश्चापि गुरुं विना ॥ ५३ ॥
सच्छास्त्रोल्लङ्घनं वापि कुतर्कपरिपाटवैः ।
वैष्णवव्रतसंत्यागो द्वादश्याश्च विशेषतः ॥ ५४ ॥
ऊर्ध्वपुण्ड्रादिसंत्यागः परिचर्यापराहतिः ।
प्रसादतीर्थग्रहणाद्भोजनादिरुचिस्तथा ॥ ५५ ॥
उत्सवानामकरणं तत्क्षेत्रादिष्वसर्पणम् ।
शपथाचरणं तस्य निजधर्मस्य विक्रयः ॥ ५६ ॥
प्रसादविक्रयश्चापि भक्तद्रोहो ह्यनादरः ।
तत्कथायाः परित्यागो गुरुदेवधनग्रहः ॥ ५७ ॥
गुरूणां संपरित्यागो मर्यादाभञ्जनं हरेः ।
गुरुश्रीष्वनुरागश्च देवगोपुरभञ्जनम् ॥ ५८ ॥
एवमादिर्नृदोषा वै महादोषो विनाश्यति ।
नास्तिक्यबुद्धिः सर्वत्र गुरौ चापि मनुष्यधीः ॥ ५९ ॥
शिलाधीश्च हरेर्मूर्तौ जलधीश्चरणामृते ।
सामान्यधीः सत्सु सदा परद्रोहाभिचिन्तनम् ॥ ६० ॥
अनिग्रहश्चेन्द्रियाणामहङ्कारस्य संभृतिः ।
स्वधर्मस्य परित्यागो हिंसाधर्मरुचिस्तथा ॥ ६१ ॥
अशक्यधर्माचरणं शक्यधर्मे तथालसः ।
गौणता भगवद्धर्मे संत्यागश्चोपजीविनाम् ॥ ६२ ॥
भगवच्छास्त्रगूढार्थविदां सङ्गस्य वञ्चनम् ।
नित्यनामजपादीनां नियमादिविलोपनम् ॥ ६३ ॥

परनिन्दारतिश्चापि सर्वतोऽथात्मदैन्यता ।
वृथाग्रहः क्लिष्टकार्ये परदारधनादरः ॥ ६४ ॥
आत्मोत्कर्षाभिसंख्यानं भोगलम्पटता तनौ ।
अनभ्यासश्च शास्त्राणां तथा मूढाग्रहः स्वतः ॥ ६५ ॥
अविश्वासो महद्वाक्ये लोकनामप्रिया कृतिः ।
नोत्सवो हरिकार्येषु न तस्मिन्प्रेमशीलनम् ॥ ६६ ॥
देवानां च तथा द्रोहः पाषण्डानां प्रवर्तनम् ।
मद्यमांसादिसंभुक्तिः प्रतिमादेश्च भञ्जनम् ॥ ६७ ॥
सतां च हिंसनं चापि महापातकिसंभृतिः ।
भक्तधर्मोच्छेदनं च गुरुद्रोहस्तथोल्बणः ॥ ६८ ॥
मर्मप्रकाशनं चैषां कपटाचरणं हरौ ।
वृत्तेर्विलोपनं चैषां वाक्पारुष्यात्रतादिकम् ॥ ६९ ॥
महादोषगणं प्राहुर्दूरतस्तं परिवर्जयेत् ।
सकृदासक्त एतेषु कुर्यात्प्रतिकृतिं तथा ॥ ७० ॥
येन येन हरिस्तुष्येद् गुरुर्हरिजनोऽपि वा ।
आत्मा बिभेति तत्कार्ये शरणं भावयेद्धरिम् ॥ ७१ ॥
यद्यत्रापि भवेद्भीतिः शरणं न भवेद्धरिः ।
जलेऽपि वह्नौ संजाते कस्तृषां शमयिष्यति ॥ ७२ ॥
तस्माद्धरिं समाश्रित्य यतेत मुनिवर्त्मना ।
सिद्ध्यतीति न संदेहो निरालम्बः पतत्यधः ॥ ७३ ॥
हरिर्नामजपध्यानैः पुनाति श्वपचोऽपि हि ।
किं पुनः शरणापन्नान् वेद्मि तां शाश्वतीं मतिम् ॥ ७४ ॥

इति शाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे तृतीयांशे
शुद्ध्यपराधवर्णनं नाम दशमोऽध्यायः ॥ १० ॥

---

# एकादशोऽध्यायः ।

शाण्डिल्य उवाच—

अथातः श्रूयतां विप्राः केशवस्य प्रसादनम् ।
चेतसा वचसा चापि वपुषा च यथायथम् ॥ १ ॥
स्वधर्माचरणाच्छक्त्या विधर्मपरिवर्जनात् ।
गुरोराज्ञाभिसंधानात् परितुष्यति केशवः ॥ २ ॥
वैदिकैरपि संस्कारैः क्षेत्रस्यास्य विशोधनात् ।
क्षेत्रज्ञसंयमाच्चापि परितुष्यति केशवः ॥ ३ ॥
दीक्षाया ग्रहणाच्चापि श्रीमद्भागवतागमे ।
तदाचारप्रसक्त्या च परितुष्यति केशवः ॥ ४ ॥
यत्किंचिच्च कचिच्चापि संभवे तुष्टिमान्यतः ।
तस्य तस्यार्पणात्सद्यः परितुष्यति केशवः ॥ ५ ॥
बाल्यपौगण्डकैशोरतारुण्यादिषु यःपुमान् ।
प्रबुध्य भजते देवं तस्य तुष्यति केशवः ॥ ६ ॥
अन्तेऽपि जर्जरीभूतः श्रद्धया यः स्मरेद्धरिम् ।
प्रपन्नः पादयोर्विष्णोः तस्य तुष्यति केशवः ॥ ७ ॥
अहिंस्रं नानुरागं यः स्वधर्ममनुतिष्ठति ।
उदासीनवदासीनस्तस्य तुष्यति केशवः ॥ ८ ॥
वैष्णवं धर्ममाश्रित्य योऽन्यधर्मं न विन्दति ।
सर्वत्र समबुद्धिश्च तस्य तुष्यति केशवः ॥ ९ ॥
विष्णोरन्यस्य देवस्य यः स्वयं नाश्रयं चरेत् ।
हरितोऽपि न कामार्थी तस्य तुष्यति केशवः ॥ १० ॥
प्राणात्ययेऽपि संप्राप्ते यो हरेः शपथं न वै ।
करोति सत्यमनृतं तस्य तुष्यति केशवः ॥ ११ ॥

हरेरनर्पितं वस्तु यो न स्वीकुरुते क्वचित् ।
हितं मितं हरौ धत्ते तस्य तुष्यति केशवः ॥ १२ ॥
योऽन्यदेवार्पितं भक्तो निर्माल्यादि न संदधेत् ।
पराश्रयं न कुरुते तस्य तुष्यति केशवः ॥ १३ ॥
पातिव्रत्यव्रतं यस्तु हरेः समनुतिष्ठति ।
तदर्थमखिलारम्भी तस्य तुष्यति केशवः ॥ १४ ॥
शुक्लां कृष्णां द्वादशीं यः समभावेन सेवते ।
जयन्तिव्रतकृच्चापि तस्य तुष्यति केशवः ॥ १५ ॥
पूजाप्रवाहसिद्ध्यर्थं ग्रामारामादि योऽर्पयेत् ।
उपकार्यां तथा कांचित् तस्य तुष्यति केशवः ॥ १६ ॥
असाध्येषु च कार्येषु भक्तानां वा हरेरपि ।
यः पुरःसरतामेति तस्य तुष्यति केशवः ॥ १७ ॥
तुल्यातुल्यसपर्यायां पर्यायं यः प्रवर्तयेत् ।
देशकालानुरूपं च तस्य तुष्यति केशवः ॥ १८ ॥
अर्वाचीनेषु कार्येषु भगवद्भक्तयोरपि ।
यो न ग्लायति नोदास्ते तस्य तुष्यति केशवः ॥ १९ ॥
प्रत्यहं वा प्रतिलवं प्रेम्णा परिचरन्नपि ।
विश्रान्तिं लिप्सते नैव तस्य तुष्यति केशवः ॥ २० ॥
सर्वाधिकं हरिं वेत्ति तस्माद्‌भ्यधिकं गुरुम् ।
ततोऽपि च तयोर्भक्तं तस्य तुष्यति केशवः ॥ २१ ॥
न निष्ठुरं प्रवदति प्रभौ सुप्रतिकूलके ।
स्वात्मानं चाधीनतया तस्य तुष्यति केशवः ॥ २२ ॥
दुष्कृतं दुष्कृतं स्वीयं सुकृतं सुकृतं प्रभोः ।
यः सदैवमभिध्यायेत्तस्य तुष्यति केशवः ॥ २३ ॥
येन केनाप्युपायेन हरौ संयोजयन् धियम् ।
गुरोरनुग्रहं लब्ध्वा तस्य तुष्यति केशवः ॥ २४ ॥

हरौ गुरौ महामन्त्रे भक्ते भागवतागमे ।
सर्वत्र समधीर्योऽसौ तस्य तुष्यति केशवः ॥ २५ ॥
भगवत्परिचर्यायां तत्कथाश्रवणेऽपि वा ।
यस्य यान्ति च यामाः षट् तस्य तुष्यति केशवः ॥ २६ ॥
भगवच्छास्त्रमभ्यस्य स्वप्रबन्धानि संदधेत ।
पाठयेद् गुरुभक्तेभ्यस्तस्य तुष्यति केशवः ॥ २७ ॥
गद्यैः पद्यैर्निबन्धैश्च नृत्यगीतैर्मनोहरैः ।
यः प्रीणयति गोविन्दं तस्य तुष्यति केशवः ॥ २८ ॥
मालोर्ध्वपुण्ड्रमुद्रादिभक्तिचिन्हैरलङ्कृतः ।
तत्प्रसादैकसंभोगी तस्य तुष्यति केशवः ॥ २९ ॥
हरेरनर्पितं वस्त्रभूषामाल्यान्नपानकम् ।
मरणेऽपि न चादत्ते तस्य तुष्यति केशवः ॥ ३० ॥
दाता दापयताध्येता मैत्रः कारुणिको रुजुः ।
विरक्तः सर्वभोगेभ्यस्तस्य तुष्यति केशवः ॥ ३१ ॥
कुटुम्बं दयया बिभ्रन् भक्तान् हरिधियार्चयन् ।
अतिथीन् स्वीयबुद्ध्या च तस्य तुष्यति केशवः ॥ ३२ ॥
लोकाचारं परित्यज्य सदा भावं समाश्रितः ।
प्रेमप्रसरविक्षिप्तस्तस्य तुष्यति केशवः ॥ ३३ ॥
नृत्यति गायति क्वापि वन्दते वदते हरिम् ।
लोकलज्जां परित्यज्य तस्य तुष्यति केशवः ॥ ३४ ॥
हरिं गुरुं महामन्त्रं भक्तं भक्तसुलक्षणम् ।
कदापि यो न त्यजति तस्य तुष्यति केशवः ॥ ३५ ॥
निर्ममो निरहङ्कारः सदाचारो जितेन्द्रियः ।
सर्वक्रियार्पणकरस्तस्य तुष्यति केशवः ॥ ३६ ॥
मद्यमांसादिवस्तूनि नियुक्तोऽपि न यः स्पृशेत् ।
न च हिंसारुचिर्यस्य तस्य तुष्यति केशवः ॥ ३७ ॥

परदारासु चालुब्धः परवित्तेषु निस्पृहः ।
परद्रोहे पराभूतस्तस्य तुष्यति केशवः ॥ ३८ ॥
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षस्पृहः शान्तस्तस्य तुष्यति केशवः ॥ ३६ ॥
न त्यजेच्छरणापन्नं विपन्नं यो न संत्यजेत् ।
प्रतिपन्नं त्यजेद्यो नो तस्य तुष्यति केशवः ॥ ४० ॥
अन्नदो जलदस्त्राता भैषज्येनोपकारकृत् ।
विद्याविवेकदश्चापि तस्य तुष्यति केशवः ॥ ४१ ॥
वेदान् रहस्यार्थयुतान् लक्षणागमकैः सह ।
यः पठेत्पाठयेद्वापि तस्य तुष्यति केशवः ॥ ४२ ॥
पदक्रमपदावृत्तिजटादण्डघनादिभिः ।
एकामृचं त्वभ्यसति तस्य तुष्यति केशवः ॥ ४३ ॥
पुराणं चेतिहासं च काम्यं भगवतश्च यः ।
सूत्रवृत्तिं वेत्ति भाष्यं तस्य तुष्यति केशवः ॥ ४४ ॥
रामस्य चरितं दिव्यं कृष्णस्य जगदीशितुः ।
श्रद्धया धारयेद् यस्तु तस्य तुष्यति केशवः ॥ ४५ ॥
अहिंस्रं हरिनिष्ठं च सदाचारं सुमङ्गलम् ।
सात्विकं तत्पठेच्छास्त्रं तस्य तुष्यति केशवः ॥ ४६ ॥
मन्वादिधर्मशास्त्राणि एवमर्थेऽवधार्य यः ।
तदुक्तस्वाश्रमाचारस्तस्य तुष्यति केशवः ॥ ४७ ॥
शालग्रामशिलाचक्रं वृन्दा गौर्गोपिचन्दनम् ।
यस्य भागवतं गेहे तस्य तुष्यति केशवः ॥ ४८ ॥
त्रैविध्यनास्तिक्यवृते विनाशे गुरुदेवयोः ।
उपवासपरो यस्तु तस्य तुष्यति केशवः ॥ ४९ ॥
गालिकायाः प्रदाने वा श्रवणे गुरुदेवयोः ।
प्रायश्चित्तपरो यस्तु तस्य तुष्यति केशवः ॥ ५० ॥

अतिधर्मं चरेद्यस्तु अतिपापं च वर्जयेत् ।
देशकालरहस्यज्ञस्तस्य तुष्यति केशवः ॥ ५१ ॥
देहाचारं स्वपूर्वेषामात्माचारं यथारुचि ।
कुर्यात्तद्वच्चैकनिष्ठस्तस्य तुष्यति केशवः ॥ ५२ ॥
साङ्ख्यं योगस्तथा न्यासः आत्माचार इदं त्रयम् ।
तेषु यो भक्तिमान् कृष्णे तस्य तुष्यति केशवः ॥ ५३ ॥
गुरौ श्रद्धा हरौ भक्तिस्तथा तीर्थाहरणं हरेः ।
मत्वावमर्षस्सर्वेषां हरेः सन्तोषकारणम् ॥ ५४ ॥
वपुषा सेवनं तस्य वचनाद्गुणवर्णनम् ।
चेतसा चिन्तनं विष्णोस्तस्य संतोषकारणम् ॥ ५५ ॥
नवधा भक्तिकृन्नित्यं नित्यं तत्तीर्थसेवकः ।
महामन्त्रपरो नित्यं स प्रीणाति हरिं परम् ॥ ५६ ॥
कार्तिके मार्गशीर्षे च माघे वा माधवेऽपि च ।
प्रातःस्नायी सदा यस्तु स प्रीणाति हरिं परम् ॥ ५७ ॥
वृन्दादलैर्महामोदैः शुभैर्लेपैः शुभाम्बरैः ।
शुद्धै रस्यैः सुपाकैश्च तर्पयन्तोषयेद्धरिम् ॥ ५८ ॥
आत्मनो भावतः शुद्धो दीक्षया देहतः शुचिः ।
महामन्त्रेण वचसा स प्रीणाति हरिं परम् ॥ ५९ ॥
धर्मार्थकाममोक्षाख्यैर्भक्तेश्चाङ्गैरलङ्कृतः ।
योऽभ्यसेत्संहितामेतां स प्रीणाति हरिं परम् ॥ ६० ॥
अस्यां धर्मा मया प्रोक्ताः पावनाः सुकरा नृणाम् ।
विशोधयति तैर्देहं स प्रीणाति हरिं परम् ॥ ६१ ॥
स्वरूपावस्थितिज्ञानाज्जायते ज्ञानसंहतौ ।
नानाप्रकारैस्तां कुर्यात्स प्रीणाति हरिं परम् ॥ ६२ ॥

तोषणं जगदीशस्य भक्तेः सर्वस्वमुच्यते ।
तदाचारपरो यस्तु स प्रीणाति हरिं परम् ॥ ६३ ॥
अभ्यस्य संहितामेतां भवेन्निःसंशयो द्विजः ।
वाञ्छितार्थप्रदः पुंसामितिसत्यं गिरोऽस्तु वः ॥ ६४ ॥
तीर्थे यज्ञे तथा श्राद्धे श्रावयेद्योऽत्र संहिताम् ।
तस्य षाड्गुण्यता भूयादात्मनः श्रेयसां पदम् ॥ ६५ ॥
अस्मिन्समस्तनिगमागमसारभूते ।
शास्त्रे मुरारिपदपङ्कजभक्तिरम्ये ॥
सर्वार्थसार्थनिवहे निपुणं यथार्थात् ।
सर्वं समुक्तमपरं न हि वर्णनीयम् ॥ ६६ ॥
शास्त्रं प्रपूज्य भगवन्मयमादिमूर्तिम् ।
श्रीकृष्णमस्य गदितारमथो द्विजेन्द्रम् ॥
भक्त्या सदैव शृणुयात्परिकीर्तयेद्वा ।
तत्रोदितं विदधते स भवेत्कृतार्थः ॥ ६७ ॥
यन्नामधेयमखिलाघचयं निहन्ति ।
लोके कथंचिदपि संस्मरणे प्रयुक्तम् ॥
तेनैव वेदवपुषा पुरुषेण भूम्ना ।
मह्यं हृदा निगदितं किल शास्त्रमेतत् ॥ ६८ ॥
वेदैर्यत्प्रमितं सतां सुचरितैर्मन्वादिगीर्भिर्भृतम् ।
नानाख्यानपुराणसाररसितं विश्वोपकारात्मकम् ॥
विष्णोस्तस्य प्रसादनैकपरमं शास्त्रं ममैतद् द्विजाः ।
किं किं वाञ्छितमातनोति न नृणां कल्पद्रुकल्पं सताम् ॥६९॥
येषां स एव भगवान् दययेदनन्तः ।
तेषां रुचिर्भवति चात्र न चेतरेषाम् ॥

यस्यां हरेरपि गुरोर्महिमाभिगीतः ।
संसारपारकरणः परिकीर्तितोऽहि ॥ ७० ॥
सदाभ्यस्यं सदाभ्यस्यं शास्त्रं भागवतं त्विदम् ।
सदा ध्येयं सदा ध्येयं रूपं भगवतो द्विजाः ॥ ७१ ॥
निरूपितसदाचारः समयाचार एव च ।
भक्तेर्निश्रेयसकरः किं भूयः श्रोतुमिच्छथ ॥ ७२ ॥

इति श्रीशाण्डिल्यमुनिकीर्तितायां सर्वार्थसार्थनिरूपिकायां संहितायां पञ्चमे भक्तिखण्डे तृतीयांशे केशवसंतोषवर्णनं नाम एकादशोऽध्यायः ॥ ११ ॥

॥ समाप्तः तृतीयांशः ॥

—o—

# अथ चतुर्थोऽशः

---

## प्रथमोऽध्यायः ।

ऋषय ऊचुः—

ब्रह्मर्षे भवता सर्वे पुरुषार्था निरूपिताः ।
भक्तियोगश्च कथितः परमः पुरुषोत्तमे ॥ १ ॥
यस्य सम्पर्कमात्रेण विरक्तिर्भवसागरे ।
विज्ञानसन्ततिः शुद्धा सम्प्राप्तिः परमात्मनः ॥ २ ॥
आहारशुद्ध्या चित्तस्य शुद्धिराम्नायबोधिता ।
ध्रुवा स्मृतिस्सैव भक्तिस्ततः प्राप्तिः परात्मनः ॥ ३ ॥
ततो विवेको वैराग्यं योगो भक्तिश्च केशवे ।
श्रवणं मननं निष्ठा यतोऽष्टाङ्गैर्विमुच्यते ॥ ४ ॥
सा भक्तिः श्रीहरेर्यस्य चरणाम्भोजसेवया ।
तस्याचार्यस्य सद्भक्तिं कृपया वद नः प्रभो ॥ ५ ॥
आचार्येण विना धर्मशास्त्रज्ञानं न दृश्यते ।
आत्मज्ञानं हरेर्भक्तिर्नार्थः कोऽप्युपलभ्यते ॥ ६ ॥
परमात्मा द्विधा जातो भेदाच्छब्दार्थयोः स्वयम् ।
आदेशिकः शब्दमूर्त्तिरर्थमूर्तिःस्वयं प्रभुः ॥ ७ ॥
यस्यार्चा कथिता पूर्वं हरेरपि तदर्चनम् ।
स्वातन्त्र्यादपि साकल्यात्कथयस्व महामुने ॥ ८ ॥

शाण्डिल्य उवाच—

लोके धन्यतमा यूयमुत्तमश्लोकलालसाः ।

सर्वसाधनसम्पन्नाः सर्वज्ञा दीनवत्सलाः ॥ ६ ॥
कृतश्चैवंविधः प्रश्नो लोकानामनुकम्पया।
परोपकारनिरता भवन्ति सुजनाः सदा ॥ १० ॥
आसीदात्मा यदा चैको न सन्नासत्तमो महः।
स्वानन्दे स्वप्रकाशे च रममाणो निजात्मनि ॥ ११ ॥
निर्गुणो निष्क्रियो नित्यो निरवन्धो निरञ्जनः।
निरुपायो निराकारो निरीहो निरुपद्रवः ॥ १२ ॥
अमेयो देशकालाभ्यामपरिच्छेद्य एव सः।
अखण्डश्चाद्वयोऽनन्तो निष्प्रपञ्चोऽच्युतः स्वयम् ॥ १३ ॥
सर्वाधारः सर्वशक्तिः सर्वाकारोऽखिलात्मकः।
सर्वप्रकारोऽप्यपकृतस्सर्वस्सर्वादिरीश्वरः ॥ १४ ॥
प्रत्यग्धामा स्वयंज्योतिः परिपूर्णः परात्परः।
विराजमानः स्वैर्धर्मैस्स्वाभिन्नैरतिशोभनैः ॥ १५ ॥
कदाचिन्निजशक्त्याद्धा परयानन्तरूपया।
ज्ञानक्रियेच्छाभागैः स्वै रन्तुं भागानथारभत् ॥ १६ ॥
आनन्दाकारमात्रैकं सदानन्द इतीरितम्।
प्रादुष्कृतं प्रथमतः प्रकटीकृतवान् प्रभुः ॥ १७ ॥
पुरुषोत्तमसंज्ञस्य प्राक्तनस्य स्वधामनि।
रतये रममाणस्य लीलासृष्टिरजायत ॥ १८ ॥
तस्य धाम्नोऽक्षरस्यास्य ब्रह्मणः परमात्मनः।
छाया मायास्वरूपेण प्रथमं प्रकटीकृता ॥ १६ ॥
कालकर्मस्वभावाश्च प्रधानं पुरुषस्तथा।
इच्छा यदृच्छा संव्यक्ता यैर्विश्वं प्रकटीकृतम् ॥ २० ॥
क्षोभकः कर्मणां कालः कर्माण्यारम्भकानि च।
स्वभावः सर्वभावानां नियामकतया स्थितः ॥ २१ ॥
प्रधानं जडसंघातः पुरुषाश्चेतना अमी।

सदसद्भ्यां जगज्जातं प्रधानात्पुरुषादपि ॥ २२ ॥
कार्यप्रयोजकैवेच्छा पुरुषस्य निजात्मिका ।
यदृच्छा हेतुरहिता कार्यस्यापि प्रयोजिका ॥ २३ ॥
प्रधानान्महदुत्पत्तिर्महतोऽहङ्कृतिस्त्रिधा ।
वैकारिकाद्द् देवसर्ग इन्द्रियाणाञ्च तैजसात् ॥ २४ ॥
भूतादेर्भूतसर्गश्च आकाशादिक्रमादभूत् ।
आकाशो देशरूपेण कालेन सह तिष्ठति ॥ २५ ॥
सर्वं स्याद् देशकालाभ्यां स च शब्दगुणो महान् ।
वायुः स्पर्शगुणस्तस्मात्तेजो रूपगुणं ततः ॥ २६ ॥
जलं रसगुणं तस्मान्मही गन्धगुणा ततः ।
श्रोत्रं त्वक् दृग् च रसना घ्राणमिन्द्रियपञ्चकम् ॥ २७ ॥
शब्दादिभ्यस्ततः शब्दादीनां ग्राहकमुच्यते ।
वाक्करौ चरणौ मेढ्रं पायुः कर्मेन्द्रियाणि च ॥ २८ ॥
स्थूलांशैरेव भूतानामेवासन्नु ह्यनुक्रमात् ।
श्रवणादिविसर्गान्ता अमीषां विषयाः पृथक् ॥ २९ ॥
दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः ।
इन्द्रियाणामिमे देवा मनसश्चन्द्रमाश्च यः ॥ ३० ॥
भूताभिमानिभिर्देवैरेषामेव तपोबलात् ।
हरेः शक्त्या संहतैः स्वैर्ब्रह्माण्डं निर्मितं तदा ॥ ३१ ॥
पञ्चाशत्कोटिविस्तीर्णमष्टावरणसंयुतम् ।
अकुण्ठैर्देववैकुण्ठैः कुण्ठितैर्भुवनान्तरे ॥ ३२ ॥
विराजः पुरुषस्यैतत्कार्यभूतमतीन्द्रियम् ।
सहस्रमुखबद्धस्य श्रोत्रनेत्रादिसंयुतम् ॥ ३३ ॥
सृज्यन्ते सृज्यमानाश्च सृष्टाश्च शतकोटिशः ।
ह्रीयन्ते ह्रीयमाणाश्च ह्रताश्च शतकोटिशः ॥ ३४ ॥
दह्यन्ते दह्यमानाश्च दग्धा वा भस्मतां गताः ।

अपवर्गेण निर्बन्धाः सम्प्राप्ते प्रति सञ्चरे ॥ ३५ ॥
अनादयः प्रवाहेण सादयः स्वात्मना हरेः ।
अनन्तलीलया विष्णोः कोटिशोऽत्राण्डराशयः ॥ ३६ ॥
पाताले शेषवैकुण्ठः श्वेतद्वीपश्च भूतले ।
ध्रुवस्य नाकलोकानां रमायाश्च ततः परम् ॥ ३७ ॥
वेधसो मुकुटे विष्णोर्लोकेशानां महस्ततः ।
अष्टमावरणादूर्ध्वं विरजायाः प्रकीर्त्तितम् ॥ ३८ ॥
विष्णोः शिवस्य धातुश्च तस्याधो भुवनानि च ।
पुराणि चावताराणां शुद्धमस्मात्परन्तु तत् ॥ ३६ ॥
परतो व्यापिवैकुण्ठं लीलाधाम हरेर्मतम् ।
केवलानन्दचिन्मूर्त्तिः सर्वत्रैव च सन्ततम् ॥ ४० ॥
एवं लोकान्तरमपि सर्वं सर्वत्र विद्यते ।
अमीषां देवदेवा ये परं जानन्ति नोत्तरम् ॥ ४१ ॥
देवाश्च मानवा जीवा दानवा बहुशो भवात् ।
ते सर्वे श्रेयसः प्राप्त्यै तपोयोगं समाश्रिताः ॥ ४२ ॥
तेषां तपःप्रभावेण ब्रह्मविष्णुमहेश्वराः ।
कम्पिताश्चापरे देवा वरं दातुं समागताः ॥ ४३ ॥
दानवा वरतः शम्भोः मानवा वेधसो वरात् ।
देवाः केचन सन्तुष्टाः जाता विष्णोवरादपि ॥ ४४ ॥
परमेश्वरलीलया जीवा ये येऽत्राधिकारिणः ।
न जगृहुर्वरं तेभ्यः कामयन्तोऽस्य दर्शनम् ॥ ४५ ॥
निर्गुणेन स्वरूपेण परमेभ्यः परात्मना ।
दत्त्वैव दर्शनं तेभ्यः सोररीकृतवान् विभुः ॥ ४६ ॥
परमानन्दसन्मूर्त्तिर्देवः श्रीपुरुषोत्तमः ।
निजैकशरणानाञ्च दर्शनञ्च वरं ददौ ॥ ४७ ॥
सर्वेषामुपकारार्थं श्रेयसः प्राप्तये हरिः ।

आचार्यरूपं जगृहे कृपया भक्तवत्सलः ॥ ४८ ॥
आचार्यो बहुधा जातोऽनुगृह्णन् सुबहून् जनान् ।
पुरारिं च रमां देवीं सनकादीनुपादिशत् ॥ ४९ ॥
वृत्तये मुक्तिमार्गस्य हरेर्भक्तिप्रवृत्तये ।
प्रवृत्यर्थं वसिष्ठादीन् कर्ममार्गेऽधिकारिणाम् ॥ ५० ॥
आचार्यश्चादेशिकश्च तीर्थरूपो गुरुस्तथा ।
चतुर्धा मूर्त्तिभेदेन कार्यभेदादभूद्धरिः ॥ ५१ ॥
आचार्यो मन्त्रदो मन्त्रव्याख्याता तत्वविद् घृणी ।
सदाचारो हरेर्भक्तस्तपोनिष्ठः प्रतापवान् ॥ ५२ ॥
आदेशको मन्त्रदाता पण्डितो भक्तिमान् हरेः ।
स्वमार्गरक्षणे दक्षो निर्दोषः सर्वसद्गुणः ॥ ५३ ॥
तीर्थः पुण्यात्मको मान्यः शरणागतपावनः ।
सन्मार्गशिक्षणे दक्षः शान्तो दान्तो दृढव्रतः ॥ ५४ ॥
गुरुः स्यान्मन्त्रदः शिक्षाकरो रक्षाकरः परः ।
हितकृत्पाठकः स्तोता याजकोऽर्च्यः सुरार्चकः ॥ ५५ ॥
इत्थं विनिर्णयः प्रोक्तो गुरूणामृषिभिः पुरा ।
एषामेकतमं भक्त्या चाश्रितः सिद्धिभाग्भवेत् ॥ ५६ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे तुरीयांशे गुरुप्रभवनिरूपणं नाम प्रथमोऽध्यायः ।

---

## द्वितीयोऽध्यायः ।

आचारस्तु पुरैवोक्तस्सतां धर्मनिरूपणे ।
साम्प्रदायिक आचारो मयात्रैव निरूपितः ॥ १ ॥

गुरुभक्त्यात्मकाचारः पादुकाचार उच्यते ।
सदाचाराद्विशुद्धात्मा योग्यः स्यात्साम्प्रदायिके ॥ २ ॥
शुद्धोऽस्मात्पादुकाचारेऽधिकारी गुरुपूजने ।
गर्भाधानादिसंस्कारैर्देह्यात्मास्य विशुद्ध्यति ॥ ३ ॥
आह्निकाचरणादस्य शुद्ध्यतीन्द्रियसंशयः ।
इष्टापूर्त्तैश्चेतसोऽस्य विशुद्धिः समुदीरिता ॥ ४ ॥
आत्मनोऽष्टगुणैरात्मा विज्ञानेन विशुद्ध्यति ।
हरेर्भक्त्या गुरोर्भक्त्या सद्यः शुद्धिर्विधीयते ॥ ५ ॥
देहेन्द्रियान्तःकरणात्मनां नैतां विना क्वचित् ।
विज्ञानं च विरक्तिश्च विशुद्धिस्तां समाश्रिता ॥ ६ ॥
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते यथा ।
तथायोविन्दुवद्भक्तिर्विनाशयति सर्वशः ॥ ७ ॥
हरिभक्तिः पुरैवोक्ता गुरुभक्त्यधुनोच्यते ।
दीक्षा ह्यनन्तरं कार्या सा चतुर्धा पृथक् पृथक् ॥ ८ ॥
दीक्षोपदेशः शरणागतिरस्याप्यनुग्रहः ।
अनुशासनमित्येवं चतुर्धा समुदीरितम् ॥ ९ ॥
दीक्षा बहुविधा प्रोक्ता चतुर्धा सा समासतः ।
भोगयोगार्णविज्ञानैरभिषेकादिकर्मभिः ॥ १० ॥
हरिभावनया भक्तिस्तदन्तर्यादिभावनैः ।
देवर्षिभावनैस्तस्य हितकृत्पितृभावनैः ॥ ११ ॥
सर्वत्र समधीर्विष्णुर्गुरुरूप्यनुकम्पनः ।
विज्ञानेश्वरभक्त्या च चोदकः शुभकर्म्मणाम् ॥ १२ ॥
अन्तर्यामितया तस्य कर्ममूलं निकृन्तति ।
प्रयच्छति शुभां वृत्तिं यया चामृतमश्नुते ॥ १३ ॥
देवभावनया सत्वबुद्धिं दत्त्वात्मदर्शनम् ।
ददाति चर्षिभावेन ज्ञानं य(म)ज्ञादि(न)नाशनम् । १४ ॥

हितकृद्भावना तस्य हितानां कारणं परम् ।
पितृभावनया चेष्टं कुरुतेऽनिष्टवारणम् ॥ १५ ॥
आचरेद्यः स्वयं धर्मं परानाचारयत्यपि ।
हरिप्रभावसम्पन्न आचार्यः साम्प्रदायिकः ॥ १६ ॥
आचार्यवंशसम्भूत आचारेण तथाविधः ।
सोऽन्तर्यामितया पूज्यः पादुकाचारमाश्रितैः ॥ १७ ॥
नानालौकिकसंशुद्धिर्योगसिद्धिरमुष्य च ।
स भवेद्दैवताचार्य आप्याचार्यः सुविद्यया ॥ १८ ॥
हितकृत् पितृरूपी च हितकृत्पितृवद्गुणी ।
स लौकिको गुरुः प्रोक्तः कर्मतन्त्रे प्रशस्यते ॥ १९ ॥
बहुधा गुरवश्चैवं महीपालोऽन्नदोऽवनः ।
माता पिता मातृस्वसृपितृभ्रातृपितामहाः ॥ २० ॥
मातामहश्चाग्रजन्मा श्वशुरो विद्ययाधिकाः ।
सम्बन्धिनश्च गुरवो जातिवर्णाधिकाश्च ये ॥ २१ ॥
तत्रादौ हरिवत्पूज्यौ अपरौ देववत्तथा ।
आदेशिकस्तथा तीर्थः पूजनीयौ महर्षिवत् ॥ २२ ॥
गुरवः पितृवत्पूज्या यतो मुख्यो गुरुः पिता ।
जन्मदोऽभयदश्चैव संस्कर्त्ता मन्त्रदो यथा ॥ २३ ॥
पतिरेव गुरुः स्त्रीणां पिता सर्वनृणामिह ।
पुरोधा धर्मकर्तृणां पाठकः पठतामपि ॥ २४ ॥
एकाक्षरप्रदातारं यो गुरुं नैव मन्यते ।
स भवेत्पातकी लोके किं पुनर्ग्रन्थपाठकम् ॥ २५ ॥
धर्मकृद्धर्मशीलश्च दयालुर्धर्मचारकः ।
पातिव्रत्ये पतिर्योग्यो गुरुर्विज्ञानतो यदि ॥ २६ ॥
एतादृशः पिता पूज्यो गुरवोऽन्ये तथाविधाः ।
दूरेणैव विरुद्धानां नैषामहितमाचरेत् ॥ २७ ॥

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥ २८ ॥
शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि ।
द्वेषादिभिर्नैव तयोर्विधेयागो विधीयते ॥ २९ ॥
मनसा वपुषा वाचा ये भवन्ति गुरुद्रुहः ।
कृतैर्धर्मसहस्रैश्च नैव तेषां शुभा गतिः ॥ ३० ॥
सर्वसाधनहीनानां गुरुभक्तिमतां नृणाम् ।
इह लोके परत्रापि शुभैव गतिरिष्यते ॥ ३१ ॥
हरेर्भक्तिगुरोर्भक्तिर्गङ्गास्नानादिकन्तु यत् ।
सर्वाघनाशनं सद्यो न चैवारब्धकर्म्मणाम् ॥ ३२ ॥
गुरोर्भक्त्या क्वचिल्लोके प्रारब्धमपि नश्यति ।
प्रह्लादस्यासुरो भावो नारदानुग्रहाद्यथा ॥ ३३ ॥
परम्परागतो धर्मस्तेषान्तदुपदिश्यते ।
गुरुभिर्व्यहाराय आत्मधर्मस्तदिच्छतः ॥ ३४ ॥
कर्मण्युपासनायाञ्च यस्य श्रद्धात्ववेत्यते ।
स तत्रैवाधिकारी स्यात्पारम्पर्यं न कारणम् ॥ ३५ ॥
हरौ हरे विरञ्चौ च मिहिरे च सुरान्तरे ।
यस्य श्रद्धा भवेद्यत्र पारम्पर्य्यं न वारकम ॥ ३६ ॥
धर्मश्रद्धा भवेदादौ सुकृतैः पूर्वसञ्चितैः ।
ततो हुताशने भक्तिर्भक्तिर्वा स्यात् सुरान्तरे ॥ ३७ ॥
ततश्च मिहिरे भक्तिर्विरञ्चौ च ततः परम् ।
हरे भक्तिस्ततस्तिष्ठेत्तस्मिन् भक्तिर्हरौ भवेत् ॥ ३८ ॥
हरो गुरुर्हरिः पूज्यो देवानां पुरुषोत्तमः ।
सम्प्रदायगुरुश्चायं हरिरूप्यपरो गुरुः ॥ ३९ ॥
नारायणपराः सर्वे भक्तिमार्गाश्च तद्धिया ।
तन्मूलं निखिलं विश्वं तन्निष्ठा निखिलागमाः ॥ ४० ॥

सहस्रेषु मनुष्याणां पुण्यानां निजकर्मभिः ।
अन्यत्र दृश्यते भक्तिर्नैषा मुख्यफलप्रदा ॥ ४१ ॥
अथवा यस्य यत्किञ्चिद्रोचते तस्य तत्फलम् ।
क्रमेलकादेर्निम्बादि शास्त्रं तैः किं न लिप्स्यते ॥ ४२ ॥
इति श्रीशाण्डिल्यसंहितायां भक्तिखण्डे तुरीयांशे गुरुविशेषनिरूपणं नाम द्वितीयोऽध्यायः ॥ २ ॥

—:o:—

## अथ तृतीयोऽध्यायः ।

दीक्षां वाप्युपदेशं वा प्रपत्तिं वाप्युनुग्रहम् ।
लब्ध्वा गुरोर्गुरोर्भक्तिराचार्यादेर्विधीयते ॥ १ ॥
आचार्यो देशिकश्चापि यथा सेव्यतमोच्यते ।
ब्राह्मणः सम्प्रदायी च हरिभक्तः स उच्यते ॥ २ ॥
आचार्यो ब्रह्मणो मूर्तिर्विधेरादेशिकः स्मृतः ।
तीर्थं पुरारेर्गुरवो महर्षीणाञ्च मूर्त्तयः ॥ ३ ॥
विष्णोर्विना न भूपालः शूरश्चापि सुरासुरात् ।
अनर्षिग्रन्थकृद्भक्ता दाता स्वर्गादनागतः (?) ॥ ४ ॥
ब्राह्मणो ब्रह्मविद्भक्तो हरेर्वेदान्तपारगः ।
अग्रजन्मा यदि भवेद्गुरुरेषोऽत्र वर्णनम् ॥ ५ ॥
विधिवन्न्यस्तकर्मा च सदाचारी जितेन्द्रियः ।
आचार्यो देशिकश्चासौ योगयुक्तो विरक्तधीः ॥ ६ ॥
दृष्ट्वाचार्यं बद्धपाणिर्दूरादेव तमनुव्रजेत् ।
दिग्घस्ते पञ्चहस्ते वा दण्डवत् प्रणमेद्भुवि ॥ ७ ॥

पञ्च षट् सप्त वा चाष्टौ एकं द्वावपि शक्तितः।
साष्टाङ्गं प्रणमेद्भक्त्या श्रीगुरोर्दृष्टिगोचरे ॥ ८ ॥
प्रपदाभ्याञ्च जानुभ्यां जठरेण तथोरसा।
कराभ्यां शिरसा चापि प्रणामोऽष्टाङ्ग ईरितः ॥ ९ ॥
दासोऽस्मि वन्देऽनुग्राह्यो मनसा वचसा प्रभो।
नम आचार्य्यचरणेभ्यश्चैवं बीजपूर्वकम् ॥ १० ॥
ॐकारं ब्राह्मणो ब्रूयाद्ध्रीकारन्तु द्विजो वदेत्।
भगोऽन्यवर्णो ह्रीं वापि नमोऽन्तेऽभिदधेदयम् ॥ ११ ॥
जयनाथ कृपासिन्धो दीनबन्धो निजाश्रय।
शरण्य वत्सल प्रभो विश्वोद्धरण मङ्गल ॥ १२ ॥
दीनभावनयेत्येवं प्रणमेद्वा यथारुचि।
पुनरुत्थाय शिरसा जानुभ्याञ्च कृताञ्जलिः ॥ १३ ॥
वारंवारञ्च हस्ताभ्यां शिरसा प्रणमेद् गुरुम्।
केवलाभ्यां यदेताभ्यां कार्यकालानुसारतः ॥ १४ ॥
देवानाञ्च गुरूणाञ्च देशभेदादनेकधा।
शास्त्रभेदात्प्रणामः स्यान्नार्होऽनर्हं नमेन्नरः ॥ १५ ॥
न प्रणम्यो गुरुरपि देवतासन्निधौ स्थितः।
देवान् पितॄन्यजन्गच्छन्मलमूत्रं त्यजन्स्वपन् ॥ १६ ॥
पूजायां कर्मकालेऽपि आगतं गुरुमर्चयेत्।
तदज्ञानाद्गतो जन्तुं इन्द्रद्युम्नो नृपोत्तमः ॥ १७ ॥
नाप्रच्छन्नमुखो ब्रूयान्न नाज्ञप्तो विशेदपि।
नचोत्तमासने स्थाने नातिदूरेऽन्तिचाविशेत् ॥ १८ ॥
गच्छन्तमनुगच्छेत सङ्कटे चाग्रतो व्रजेत्।
आगच्छन्तञ्चाभिमुखं कदापि स्यान्न पृष्ठदः ॥ १९ ॥
वदेज्जयजयेत्येवं शृणुयाच्च तथेरितम्।
प्रमाणं सदसत्कुर्यात्कुर्यात्तत्परिवर्त्य सत् ॥ २० ॥

सत्यं ब्रूयात्प्रियं ब्रूयाच्छ्रीशब्देनाखिलं वदेत् ।
चरणान्तैर्लिखेन्नाम वदेच्च बहुवाचकैः ॥ २१ ॥
ऋणदानं तथाऽऽदानं वस्तूनां क्रयविक्रयम् ।
गुरुणा न समं कुर्याद्विवादं कलहं तथा ॥ २२॥
न दारेषु धने वापि कार्ये वाधिकृतो भवेत् ।
हिते प्रिये चोपकारे कैङ्कर्येऽधिकृतो भवेत् ॥ २३ ॥
न देवे पातयेच्छायां गुरावपि न पातयेत् ।
वस्त्रशय्यासनोपानदन्यच्चाप्यस्य नावहेत् ॥ २४ ॥
नाज्ञां विना विशेद् गेहे प्रौढ़पादो न संविशेत् ।
नौत्कटासनगो भूयान्न च पादौ प्रदर्शयेत् ॥ २५ ॥
तथानोल्वणवेशोऽपि शस्त्रधारी न संविशेत् ।
नाशुचिर्नापि चाभ्यक्तोऽप्यूर्ध्वपुण्ड्रादिर्जितः ॥ २६ ॥
नचावद्धशिखो भूयान्न कच्छत्रयवर्जितः ।
नैकवासा नार्द्रनीलीवासा यायाद् गुरुं प्रति ॥ २७ ॥
गुरोर्हरेस्सेवने च पुण्यकार्ये महानसे ।
पञ्चकच्छः पुमानुक्तश्चतुःकच्छाङ्गना मता ॥ २८ ॥
अन्यदा जातिकुलयोर्दैशिकं वेषमाचरेत् ।
आचारश्च गुरोर्ग्राह्यः पारम्पर्य्यादविच्युतः ॥ २९ ॥
प्रलपेन्न हसेन्नर्म कुर्यान्न कुकृतिञ्चरेत् ।
पादौ प्रसारयेन्नैव नखादेन्न स्त्रपेत्पुरः ॥ ३० ॥
न गृह्णीयाद्गुरोर्वित्तमुपभुक्तन्तु धारयेत् ।
शिरसा भक्तितो लोभान्न किञ्चित्तस्य चाहरेत् ॥ ३१ ॥
समक्षे वा परोक्षे वा गुरोराज्ञां न लङ्घयेत् ।
अनुशासनमायान्तं धृत्वा शिरसि चाचरेत् ॥ ३२ ॥
गुरोर्जन्मदिने मूलगुरोर्जन्मदिने तथा ।
उत्सवेषु च सर्वेषु गुरोरुत्सवमाचरेत् ॥ ३३ ॥

संस्कारेषु गुरोः पूजां गुरुहस्तेन तत्क्रियाम्।
पुण्यकार्याण्यपि तथा कुर्याद्वापि तदाज्ञया ॥ ३४ ॥
वासन्तैः शारदैश्चैव ग्रीष्मवर्षासमुद्भवैः।
हरेर्जन्मोत्सवैरन्यैर्हरिवद्गुरुमर्चयेत् ॥ ३५ ॥
निजगृहे समाने यो बहुमानपुरःसरम्।
तौर्य्यत्रिकेण महता आप्तैर्मित्रैः स्वबन्धुभिः ॥ ३६ ॥
पूजयेद्विधिना भक्त्या निजवित्तार्पणेन च।
कारयेच्च तथा स्वीयैस्तद्भक्तानपि पूजयेत् ॥ ३७ ॥
गायेत्तस्य गुणान्नित्यं मनसा कर्मणा गिरा।
तदेकतत्परो भूयाद्दोषं ह्यस्य नानयेत् ॥ ३८ ॥
गुर्वाज्ञया विभक्तेन कार्य्यं नास्य यशस्करम्।
सम्प्रदायविरुद्धञ्च सद्यः सर्वस्वनाशकम् ॥ ३९ ॥
प्रातः सायञ्च मध्याह्ने समर्च्योऽसौ गृहे स्थितः।
भिन्नगृहे चैकवारं योजनान्ते च पक्षयोः ॥ ४० ॥
द्वादशे योजने मासे वर्षे देशान्तरे स्थितः।
द्वादशाब्दादुपरि तु ह्यवश्यं दर्शनं चरेत् ॥ ४१ ॥
उत्तमानि च वस्तूनि आचार्यार्थं निवेदयेत्।
प्राणैरप्युपकुर्वीत किं पुनर्द्रविणादिभिः ॥ ४२ ॥
पुत्रो भवति सच्छिष्यः पुत्रीभवति चाङ्गना।
पूजायां भक्तवर्य्योऽसौ यदि स्याद्धरिभावना ॥ ४३ ॥
दम्पत्योरेकगुरुता लोके यद्यपि गर्हिता।
शास्त्रतो न विरुद्धैषा यतो जायार्द्धदेहगा ॥ ४४ ॥
दम्पत्योर्धर्मकार्येषु सहैवाधिकृतिर्यतः।
प्रतिज्ञावचनं पाणिग्रहे नार्य्यस्तथाकृतम् ॥ ४५ ॥
कचेनोदरवासेन देवयानी निराकृता।
दत्ता सुता च मुनिना शिष्याय चन्द्रशर्मणे ॥ ४६ ॥

पूर्तपुण्येषु सर्वत्र ग्रन्थिबन्धनपूर्वकम् ।
दम्पत्योरेकगुरुता शास्त्रे लोके च दृश्यते ॥ ४७ ॥
तीर्थस्नाने तथा कन्यादानादौ तु सुरालये ।
प्रतिष्ठायां मखेऽन्यत्र तयोरेको गुरुर्भवेत् ॥ ४८ ॥
याजकः पालको राजा वृत्तिदो रक्षको गुरुः ।
कन्याप्रदः पिता प्रोक्त एक एव तयोरयम् ॥ ४९ ॥
मन्त्रे ज्ञाने धर्मकार्ये उपदेशे महात्मनाम् ।
दम्पत्योरेकगुरुता श्रेष्ठा नैव विदूषिता ॥ ५० ॥

इति श्रीशाण्डिल्यसंहितायां भक्तिखण्डे तुरीयांशे गुरुसामान्य-
भक्तिनिरूपणो नाम तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

यथैव नवधा भक्तिर्देवदेवस्य कीर्त्तिता ।
तथैव नवधा भक्तिराचार्यस्यापि दृश्यते ॥ १ ॥
श्रवणं तद्गुणानाञ्च श्रोत्राभ्यां प्रीतिपूर्वकम् ।
अर्थानुसन्धिसहितं सन्माहात्म्यं तदुच्यते ॥ २ ॥
नाम्नां वापि गुणानां वा शब्दार्थज्ञानपूर्वकम् ।
प्रीत्या प्रभावज्ञप्त्या च वागुक्त्या कीर्तनं मतम् ॥ ३ ॥
स्वोक्तस्य स्वरूपस्य ध्यानञ्च प्रतिमादिभिः ।
माहात्म्यज्ञानतः प्रीत्या स्मरणं तत्प्रकीर्त्तितम् ॥ ४ ॥
न तस्य प्रतिमा लोके रूपं तस्य न सदृशे ।
इत्येवं श्रूयते वेदे प्रतिमा का निराकृता ॥ ५ ॥

बहुधा प्रतिमा तस्य तेनैव बहुधोच्यते।
अलौकिकस्य प्रतिमातुल्यः कोऽपि न चेर्यते ॥ ६ ॥
दिव्यो ह्यमूर्त्तः पुरुषः पुरुषोऽलौकिकाकृतिः।
विश्वतश्चक्षुरित्यादिराकृतिस्तस्य कल्प्यते ॥ ७ ॥
शब्दो गुणो निर्गुणोऽसौ निष्क्रियश्च निराकृतिः।
यथासंकलिताकारैर्बुध्यते लौकिकैरपि ॥ ८ ॥
एवं ब्रह्म व्यापकोऽसौमन्त्रैर्भावनयापि वा।
बुध्यते लौकिकाकारैःशास्त्रेण प्रतिपादितैः ॥ ९ ॥
अनुग्रहाल्लौकिकानां तथारूपमदर्शयत्।
रामकृष्णादिरूपेण वस्तुतोऽसावलौकिकः ॥ १० ॥
सच्चिदानन्दमात्रस्य आनन्दाकार उच्यते।
उत्तमाधमभावेन सर्वाकारः सदैव हि ॥ ११ ॥
राजदेवविभूत्या यश्चरणार्चनतोऽपि वा।
क्रियते पादसेवायास्तन्मतं पादसेवनम् ॥ १२ ॥
मन्त्रैर्भावनया प्रेम्णा अर्चनं पूजनं मतम्।
प्रणामो वन्दनं प्रोक्तं साष्टाङ्गमतिभक्तितः ॥ १३ ॥
उपभुक्तस्य गन्धादेरुपभोगोऽतिमोदतः।
प्रीत्या केवलया सेवा दास्यं वा पादुकार्चनम् ॥ १४ ॥
सख्यमुत्तमवस्तूनामर्पणञ्च हितक्रिया।
स्वात्मना सेवनं प्रीत्या महिलावद्यथा तथा ॥ १५ ॥
अहन्तां ममतां त्यक्त्वा तत्सर्वस्वं निवेद्य च।
सेवनं प्रत्यहं प्रीत्या तत्परत्वं निवेदनम् ॥ १६ ॥
सङ्कल्पितं यथा श्राद्धे सत्रे च क्रमशोऽर्प्यते।
तथा निवेदितमपि दासेन क्रमशोऽर्प्यते ॥ १७ ॥
दासः स्याच्छरणापन्नो दास्ये च शरणागतिः।
निवेदनन्तु दास्यत्वमर्पणार्थेऽर्थरक्षणम् ॥ १८ ॥

नोपायान्तरतः सिद्धिस्तथा मन्त्रेण वै यथा ।
मन्त्रद्वयं ततो देयं याभ्यां संस्कृतिरात्मनः ॥ १९ ॥
विशुद्धाय प्रपन्नाय श्रीकृष्णः शरणं मम ।
आचार्य्यः प्रथमं दद्यान्मूलमन्त्रं जितात्मने ॥ २० ॥
सत्यधा भक्तिसिद्धिःस्याद्दत्ते चास्मिन्महामनौ ।
नार्पणं शरणापत्तौ तदीयत्वं प्रसिद्ध्यति ॥ २१ ॥
तेन साम्यप्रसिद्ध्यर्थं पत्न्याः स्वप्रतिमां यथा ।
दद्यात्तस्मै महामन्त्रं दानवाक्यं समुच्चरन् ॥ २२ ॥
सहस्रपदमाभाष्य वदेच्च परिवत्सरम् ।
मितकालपदं चोक्त्वा जातकृष्णपदं वदेत् ॥ २३ ॥
वियोगजनितस्यान्ते तापक्लेशमुदाहरेत् ।
आनन्दपदमुच्चार्य्य तिरोभावोऽहमुच्चरेत् ॥ २४ ॥
ततो भगवते प्रोक्तं कृष्णायेति पदं वदेत् ।
देहेन्द्रियान्तःकरणानि तद्धर्मांश्च संवदेत् ॥ २५ ॥
दारागारपदं चोक्त्वा पुत्राप्तपदमुच्चरेत् ।
वित्तेहपदमाभाष्याथो परेणात्मनेति च ॥ २६ ॥
आभाषयेत्सह समर्पयामीति वचस्ततः ।
सङ्कल्प्य चैवं वचसा मनसापि मनुं वदेत् ॥ २७ ॥
दासोऽहमिति कृष्णं तु तवास्मीति वदेत्स्मरेत् ।
निवेदितात्मा भवति संस्कृतः स्याच्छुचिर्जपन् ॥ २८ ॥
एवं हि नवधा भक्तिः कथिता चक्रपाणिना ।
विशेषः किञ्चिदाचार्यभक्तौ तदुपदिश्यते ॥ २९ ॥
आचार्य्यभक्तिः कर्त्तव्या शिष्यैरात्महितेच्छुभिः ।
दीक्षादिनान्तान्नियम उपदेशाद्यहोऽपि हि ॥ ३० ॥
भक्त्यास्य मन्त्रसिद्धिः स्याद्दीक्षादि सफलं भवेत् ।
भवेत्कृतश्च सुकृतं दुष्कृतश्च निवर्तते ॥ ३१ ॥

ब्राह्मणक्षत्रियविशां शूद्राणां योषितामपि।
कन्यकानां कुमाराणां विधेयं गुरुसेवनम् ॥ ३२ ॥
अवश्यवृत्तिना तत्र स्नातकेन विशेषतः।
गृहस्थेन वनस्थेन कार्यैषा यतिनापि हि ॥ ३३ ॥
सुभगाभिः सतीभिश्च स्वैरिण्याद्यैश्च षण्ढकैः।
पुण्यकृद्भिः पापकृद्भिः सङ्करैरन्त्यजैरपि ॥ ३४ ॥
म्लेच्छैर्बौद्धैर्जिनैर्बाह्यैरास्तिकैर्नास्तिकैरपि।
गुरुभक्तिः प्रकर्त्तव्या सर्वैषाञ्च यथायथम् ॥ ३५ ॥
यो यस्य यद्धर्मशिक्षाकरः स गुरुरुच्यते।
पापशिक्षाकरो नैव पापकृच्छिष्यवित्तमुट् ॥ ३६ ॥
यथाकथञ्चित्स्वीकारो निजधर्मे प्रवर्त्तते।
गुरुर्गुरोः सकुल्योऽपि माननीयो मनीषिभिः ॥ ३७ ॥
सर्वाधिकश्च सम्मान्यो राजा शास्त्रानुगो हरिः।
पूजकोऽतिथिमान्यानां पालकश्चार्त्तिवारकः ॥ ३८ ॥
वैष्णवो विष्णुमूर्त्तिःस पालकोऽतिदयार्द्रधीः।
शङ्करो वाप्युदासीनो दाता भोक्ता प्रसादकृत ॥ ३९ ॥
विधिः प्रजावद्र्धकश्च इन्द्रस्तासां प्रपोषकः।
अग्निर्दुर्विग्रहो राजा यमो दुष्टैकदण्डदः ॥ ४० ॥
निऋ्र्तिर्दुष्टसत्वघ्नो गुप्तार्थाजीव्यदोऽम्बुपः।
संञ्चारी हितकृद्वायुः पूर्णार्थो धनदोऽर्थदः ॥ ४१ ॥
शेषः सर्वसहो राजा रविः सर्वप्रकाशकः।
एवं गुरुरपि ज्ञेयः क्रोधनो नृहरिः स्वयम् ॥ ४२ ॥
लुब्धस्त्रिविक्रमो ज्ञेयो द्रोग्धा परशुभृत्स्वयम्।
ज्ञानदो व्यास एवासौ सत्यसन्धस्तु राघवः ॥ ४३ ॥
विज्ञानदः कृष्ण एव नानालीलाकरः प्रभुः।
भक्तिदो नारदः साक्षात्तपोनिष्ठो महामुनिः ॥ ४४ ॥

इत्येवं भावना तस्य शिष्यैः कार्य्या यथायथम् ।
छत्रधारी च सामन्तः पुरोधा राजवन्मतः ॥ ४५ ॥
श्रोत्रियश्च ततः श्रेष्ठोऽनूचानो दीक्षितस्ततः ।
पुराणज्ञः शास्त्रवेत्ता गुरुस्तीर्थं ततः परः ॥ ४६ ॥
आदेशिकस्तथाचार्यः पूज्यानां परमो हि सः ।
देवानां परमश्चासौ तीर्थानां परमो ह्ययम् ॥ ४७ ॥
पुण्यानां परमः पुण्यो गुरोः परतरो न हि ।
गुरुभक्तिरताः सन्तो दृश्यन्ते सर्व एव हि ॥ ४८ ॥
को नाम तद्विरोधीह वैदिकोऽवैदिकोऽपि वा ।
गुरुभक्तिरता लोका भाग्यवन्तो यशस्विनः ॥ ४९ ॥
तेषां वै सकला विद्या नेतरेषां गुरुद्रुहाम् ।
गुरुद्रोहाद्रौरवाप्तिर्मूको गद्गदवाग् भवेत् ॥ ५० ॥
बधिरो वा भवेदन्धो नीचो नीचार्थकृत्खलः ।
गुरोरग्रे च कपटं मिथ्यावाक्दूषणं वृथा ॥ ५१ ॥
करोति निन्दां हास्यञ्च अन्धे तमसि मज्जति ।
गुरुं हुंकृत्य तुंकृत्य नादृत्य च विनिन्द्य च ॥ ५२ ॥
दण्डं वा पादुकोद्यम्य सद्यो भवति ब्रह्महा ।
गुरूणां गालिकादानं स्त्रीषु पापेक्षणं तथा ॥ ५३ ॥
वृत्यर्थोच्छेदनं स्तेयं महापापाय जायते ।
गुरुसेवा हरेः सेवा दानञ्च हरयेऽर्पणम् ॥ ५४ ॥
मानं तस्यैव सन्मानं तद्रूपी स यतो मतः ।
गुरुर्दाता हरिर्देयस्तस्मादस्त्यधिको गुरुः ॥ ५५ ॥
हरेरपि हरिर्योसावन्तर्यामितया स्थितः ।
हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ॥ ५६ ॥
तस्मात्सर्वप्रयत्नेन गुरुमेव प्रसादयेत् ।
गुरुं विना वृथामन्त्रस्सुकृतञ्च वृथा कृतम् ॥ ५७ ॥

हरेर्नामापि यद्धीनं पुनः कर्मान्तरन्न किम् ।
सम्प्रदायं विना मन्त्रस्सम्प्रदायं विना गुरुः ॥ ५८ ॥
सम्प्रदायं विना नाम सर्वं भवति निष्फलम् ।
सिद्धमन्त्रास्तथाविद्याः सिद्धाश्च गुरवः सुराः ॥ ५९ ॥
न्यासध्यानादिरहिताः केवला अपि सत्फलाः ।
तीर्थे काले तीर्थदेशे सत्तीर्थे मनवोऽर्पिताः ॥ ६० ॥
स्वप्नैर्देवैर्नरैः स्त्रीभिर्दत्तास्ते सफलाः सदा ।
याः स्त्रियो भगवन्निष्ठाः सधवा विधवापि वा ॥ ६१ ॥
पूजने मन्त्रदानेऽधिकृतास्ता साम्प्रदायिकाः ।
नराणामधिकारोऽस्ति दाने च ग्रहणे मनोः ॥ ६२ ॥
सुरार्चने न च स्त्रीणां भक्तितन्त्रेण तन्मतम् ।
बालो वाऽनुपनीतो वा नारी ना च नरेतरः ॥ ६३ ॥
पश्वादिर्योग्य एवास्ति दानादाने हरेर्मनोः ।
ज्ञानरूपो हरेर्मन्त्रो ह्यज्ञानतिमिरापहा ॥ ६४ ॥
अतो मन्त्रसमो नास्ति बन्धुः संसारतारकः ।
ब्रह्मयोगोऽस्य कृपया हरेरपि गुरोः सताम् ॥ ६५ ॥
मन्त्रेण ज्ञानतः शास्त्रात् क्रमादत्रावरो वरः ।
नास्ति येषां गुरुर्नृणां नारीणां वापि मन्त्रदः ॥ ६६ ॥
नचैषां वदनं वीक्ष्यं गतिश्चैषां न विद्यते ।
आनुलोम्येन वर्णानां सम्मता गुरुशिष्यता ॥ ६७ ॥
प्रातिलोम्येन नो शस्ता दाम्पत्यमपि भृत्यता ।
श्रवणं कीर्तनं मानं पादसेवा च संस्तवः ॥
अर्चनं वन्दनं दास्यञ्चार्पणं नवधा गुरोः ॥ ६८ ॥

इति शाण्डिल्यसंहितायां भक्तिखण्डे चतुर्थांशे नवधागुरु-
भक्त्युपक्रमो नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

श्रवणं तद्गुणानाञ्च प्रीत्या श्रोत्रेण धारणम् ।
कीर्त्तनं यशसां वाचा प्रेम्णा व्याहरणं गुरोः ॥ १ ॥
मानं समादरस्तस्य वपुषा वचसा धिया ।
पादुकार्चापादसेवापादसंवाहनादिकम् ॥ २ ॥
आलोको संस्तवो गद्यैर्वेत्रच्छत्रादिधारणैः ।
अर्चनं विधिना पूजा निगमागमभक्तितः ॥ ३ ॥
प्रणामो वन्दनं प्रोक्तं स्तुतिर्जापपुरस्सरा ।
पादुकाधारणं दास्यमभ्यङ्गस्नापनादिकम् ॥ ४ ॥
उपभुक्तोपभोगश्च तदेकपरता तथा ।
सर्वार्पणं स्वार्पणं तत्कामितार्थप्रियार्पणम् ॥ ५ ॥
आचार्यभक्तिभेदानां लक्षणं नवधोरितम् ।
प्रत्येकं वहुधा चैषा भक्तानां कृतिभेदतः ॥ ६ ॥
पूजापदानि वक्ष्येऽहं आचार्यस्य च षोडश ।
येषु सम्पूज्यमानोऽसौ पुण्यदोऽसौ तदा भवेत् ॥ ७ ॥
आचार्य्य एव पूज्योऽद्धा न पूज्योऽस्य सुरेश्वरः ।
आचार्य्यमाश्रिता देवा ऋषयश्च सुरेश्वराः ॥ ८ ॥
आचार्य्यदर्शिता मन्त्रा मूर्तयस्तेन चार्चिताः ।
आगमास्तेन व्याख्याता मान्याश्च फलदाश्च ते ॥ ९ ॥
मनसैव मृदा मूर्तिं कृत्वाचार्यस्य संश्रितः ।
एकलव्यः स्वयंसिद्धः किं पुनर्विधिना यजन् ॥ १० ॥
आचार्य्यस्तनयस्तस्य पत्नी च दुहितानुजः ।
मूर्त्तिस्तत्पादुकायुग्मं चित्रं लेखस्तदागमम् ॥ ११ ॥

पीठे च वाहनं स्थानं शय्याशिष्यस्तदासनम् ।
भद्रपूजापदानि स्युस्तेषां भेदास्त्वनेकशः ॥ १२ ॥
दीक्षाकाले स्थितो यादृक् ध्याने वा पूजने स्थितः ।
कथायामुपदेशे च ध्येयोऽसौ हृदयाम्बुजे ॥ १३ ॥
श्वेतवासाः पीतवासाः स्रक्पुण्ड्रादिविभूषितः ।
सहस्रारे मूर्ध्नि कञ्जे ध्येयो योगिजनैर्गुरुः ॥ १४ ॥
प्रभाते पूजनं कुर्यात्स्नातस्य कृतकर्मणः ।
स्वयं स्नातश्चरेत्पूजां ततश्चाह्निकमाचरेत् ॥ १५ ॥
एवं स्वकर्मलोप स्यादतः पूज्येऽस्य पादुके ।
पादुकापूजने प्रीतिराचार्यस्य गरीयसी ॥ १६ ॥
केवलं गुरुभक्तो यः कार्यं यस्य न चापरम् ।
स समाप्य गुरोः सेवां यत्किञ्चित्कर्म चाचरेत् ॥ १७ ॥
गुरुभक्तिपराः सन्तो मुख्यास्ते हरिसेवकाः ।
त एव धन्याः पुण्याश्च पूज्या मान्या हरिर्यथा ॥ १८ ॥
गुरुभक्तिं विना नैव हरिभक्तिः फलप्रदा ।
हरिभक्तिं विनाप्येषा गुरुभक्तिः फलप्रदा ॥ १९ ॥
पादाङ्कितं पटं चित्रं हेमादिपदकं तथा ।
सर्वं तत्पादुकारूपं चरणाङ्कैर्विभूषितम् ॥ २० ॥
गृहिणश्शायनं पत्नी दुहिता तनयोनुऽजाः ।
भ्राता कुलगुरोः पूज्यः शिष्याश्चैवोर्ध्वरेतसः ॥ २१ ॥
राजपीठं देवपीठं यन्त्रपीठं महोत्तमम् ।
मन्त्रपीठं चतुर्थैवं पीठा आदेशिकप्रभोः ॥ २२ ॥
छत्रचामरसंयुक्तं भूषितं राजभूतिभिः ।
सिंहाकारञ्च हेमादेः राजपीठं गुरोरिदम् ॥ २३ ॥
यत्रानुशास्यते शास्त्रं नृपादिभ्यो यथोचितम् ।
हिताय सर्वजगतां सद्धर्मस्य प्रवृत्तये ॥ २४ ॥

शास्त्रास्त्रदुर्गसैन्यादेश्चतुर्धा नयकर्मणः ।
यत्रोपदिश्यते रक्षा राजपीठं विशां मतम् ॥ २५ ॥
राजापि गुरुलोकानां धर्मज्ञो नीतिवत्सलः ।
परोपकारनिरतो गुरुभक्तो हरिः स्वयम् ॥ २६ ॥
राजदेवविभूत्या यो भूषितः कमलाकृतिः ।
सर्वदेवमयं चिन्हैर्देवपीठं तदुच्यते ॥ २७ ॥
स्थित्वात्र देवताध्यानं देवार्चास्थापनादिकम् ।
करोति चोपदिशति देवरूपेण दैशिकः ॥ २८ ॥
यन्त्रमन्त्रात्मकं पीठं यन्त्रपीठं तदुच्यते ।
स्वेच्छाकारं चतुष्कोणं मन्त्रसिद्धिप्रदायकम् ॥ २९ ॥
मन्त्रानुपदिशेदत्र मन्त्रान् संसाधयेदपि ।
देववत्पूजयेच्चैनं सायं प्रातः समाहितः ॥ ३० ॥
यस्यायं पूजितः पीठो गृहे तिष्ठति नित्यदा ।
तत्राभयं महालक्ष्मीर्विजयो जायते ध्रुवम ॥ ३१ ॥
पारम्पर्यागतं पीठं तद्बुध्यावापि कल्पितम् ।
संस्कृतं मुनिभिः सम्यक् मन्त्रपीठं तदुच्यते ॥ ३२ ॥
आचार्यो मन्त्रपीठस्थो योग्यः कर्मसु स स्वयम ।
मन्त्रव्याख्याकरो व्याख्याकरो धर्मोपदेशकः ॥ ३३ ॥
आचार्यो निजपीठस्थः सर्वेषां पूज्यतां व्रजेत् ।
नचास्य पूज्यः कोऽप्यस्ति संम्प्राप्तं स्वगुरुं विना ॥ ३४ ॥
आचार्य्यवंशप्रभवा गुरवः स्वागमस्य ये ।
राजानो माननीया ये तेऽपि मान्या यथोचितम् ॥ ३५ ॥
समागतस्तं प्रणमेद् बद्धाञ्जलिपुटः स्थितः ।
नोपायेद्रिक्तपाणिस्तु प्रथमं चाज्ञया विशेत् ॥ ३६ ॥
कम्बलाजिनदर्भाद्यैरासनं योगिनां भवेत् ।
पट्टोत्तमांशुकैस्तद्धि भोगिनां तूलिकादिकम् ॥ ३७ ॥

येष्वयं सुखमासीनः पूजितः पूजयेच्च तत्।
स्वदारैः शयनं पूज्यं दासैश्चावरजन्मभिः ॥ ३८ ॥
मूर्त्तिचित्रादिभिः सर्वैर्वाहनं यानमेव च।
लेखो जपवटिश्चापि विदा पूज्यं तथागमम् ॥ ३९ ॥
शिष्यो गरूणां सम्पूज्यः प्रथमश्चोर्ध्वरेतसाम्।
अनुकूलगुणैर्युक्तस्तदभावे सतीर्थकः ॥ ४० ॥
सम्प्रदायस्य विद्वेषो प्रतिकूलोऽर्थधर्महा।
शिष्यः सतीर्थो नैवाचार्यो नायं तत्पदमर्हति ॥ ४१ ॥
गृहिणां क्वचिदेवायमर्च्यः स्यात्सहधर्मणि।
पुत्रः स्वदुहिता बन्धुः साधवोऽर्च्या ह्यनुक्रमात् ॥ ४२ ॥
यत्र स्थितश्च गुरुभिर्नीयते पुण्यकर्मसु।
स्थानं तदेव संपूज्यं पितुर्वै पादुकासनम् ॥ ४३ ॥
यत्किञ्चित्तस्य सम्बधि प्रियं पुण्यं सुशोभनम्।
तत्सर्वं पूजयेच्छिष्यो दासीदासभृतादयः ॥ ४४ ॥
ब्राह्मणः सर्ववर्णानां पूज्यो भवति सद्गुरुः।
राजन्याद्याश्चानुलोमैः प्रातिलोम्येन शिष्यता ॥ ४५ ॥
मन्त्रार्थे वैदिके मन्त्रे विप्राणामेव सा मता।
मोक्षे भागवते धर्मे ह्यन्यस्यापि महात्मनः ॥ ४६ ॥
साङ्ख्ययोग्यादिभिः प्रोक्तं मोक्षशास्त्राद्यनुत्तमम्।
एवं भागवतं शास्त्रं नारदाद्यैर्महर्षिभिः ॥ ४७ ॥

इति श्रीशाण्डिल्यसंहितायां भक्तिखण्डे चतुर्थांशे गुरुपूजापद-
निरूपणं नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## अथ षष्ठोऽध्यायः ।

गुरुरूपी स भगवान् सर्वत्र गुरुमूर्त्तिषु ।
विराजते समुद्धर्त्तुमेकोऽनेकस्वरूपधृक् ॥ १ ॥
एष एव निजं कार्य्यमुद्धारं भजतां नृणाम् ।
कृत्वा निवर्त्तते तस्मादर्चाभ्यश्च यथा हरिः ॥ २ ॥
तेषां स्वकर्मभिस्तैस्तैः फलं तादृक् प्रयच्छति ।
तद्भक्तानां स्वश्रद्धाया अनुरूपं प्रयच्छति ॥ ३ ॥
गुरुमूर्त्तिप्रतिकृतिस्तथा तत्पादुकायुगम् ।
गुरुरूपी हरिः साक्षात्पूजने विशति स्वयम् ॥ ४ ॥
गुरुवद्गुरुपत्नीषु पादुकासु सुतेषु च ।
आसने वेदिकास्थाने तदीयेष्वर्चनं चरेत् ॥ ५ ॥
गुरूणां पादुके पूज्ये विप्राणां चरणद्वयम् ।
ऋषीणां निलयं पूज्यं पितृणां पिण्डमेव च ॥ ६ ॥
सिंहासनं नरेन्द्राणां महतामनुशासनम् ।
देवानां मूर्त्तयः पूज्याः सर्वेषां वा यथायथम् ॥ ७ ॥
न चासंम्पूज्य भुञ्जीत गुरुं वा गुरुपादुके ।
महात्मनां तद्भक्तानां व्रतमेवं निरूपितम् ॥ ८ ॥
दक्षिणे जलजं वज्रं चापं कौमोदकी तथा ।
व्रततिस्तोरणं केतुः श्रीगुरोश्चरणे मतम् ॥ ९ ॥
वामे मीनाङ्कुशे चक्रं सरोजं च यवो ध्वजः ।
कलशो राजते नूनं भक्तानां सुखहेतवे ॥ १० ॥
श्रीगुरोश्चरणौ पूज्यौ पादुके वापि भक्तितः ।
नियमो वा सदा धार्य्यो लब्धमन्त्रैश्च दीक्षितैः ॥ ११ ॥

समक्षे वा परोक्षे वा गुरोराज्ञानुरोधतः ।
पूजयेत्पादुकायुग्मं पटं वापि तदङ्कितम् ॥ १२ ॥
गुरुमूर्त्तिः परं ब्रह्म पादुकायां व्यवस्थितम् ।
तस्मात्तत्पादुके पूज्ये तद्भक्तैर्नित्यदार्चने ॥ १३ ॥
गुरुभक्तिरतास्सन्तो दृश्यन्ते सर्व एव हि ।
को नाम तद्विरोधीह वैदिकोऽवैदिकोऽपि वा ॥ १४ ॥
गुरुभक्तिरता लोका भाग्यवन्तो यशस्विनः ।
तेषां वै सफला विद्या नेतरेषां गुरुद्रुहाम् ॥ १५ ॥
भृतकाध्यापने चैव भृतकाध्ययने तथा ।
गुरुता शिष्यता नैव पुण्यं न नियतेऽकृते ॥ १६ ॥
गुरोराजीव्यमापाद्य योऽधीते गुरुभक्तितः ।
पुण्यं शतगुणं तस्य गुरोरध्यापने तथा ॥ १७ ॥
याज्ञवल्क्ये न रैभ्येण विद्या दक्षिणयार्पिता ।
उपहारं ततो ग्राह्यं विद्याया पूजनं हि तत् ॥ १८ ॥
देवस्य दक्षिणे पार्श्वे पूजयेद्ग गुरुपादुकाम् ।
निवेश्य फलकेऽभ्यर्च्य यथालब्धोपचारकैः ॥ १९ ॥
गुरोः समक्षे तस्याग्रे यजेत्पीठेऽस्य पादुके ।
पादाङ्कितं पटं चापि मूर्त्तिस्थानान्तरे यजेत् ॥ २० ॥
आत्मपात्रं गुरोः पात्रं भगवत्पात्रमेव च ।
न तत्र सङ्करं कार्यं पाद्यार्घ्याचमनेष्वपि ॥ २१ ॥
चित्रं काचावलम्बेन लेखं कोशावलम्बतः ।
पुस्तकं पट्टकालम्बात्पूज्यमन्यद्यथायथम् ॥ २२ ॥
गुरुपत्नीं स्वसारञ्च तनयां युवतीं स्नुषाम् ।
प्रणामैः पूजयेद्दूरात्पूजाद्रव्यसमर्पणैः ॥ २३ ॥
वृद्धायाश्चरणौ पूज्यौ बालायाश्च तथा गुरोः ।
सदा ज्ञातः समक्षेऽर्च्यः परोक्षे तु स्वतोऽखिलाः ॥ २४ ॥

पुत्रोऽनुजोऽस्य शिष्यो वा पूज्यास्तदनुवर्त्तिनः ।
सेवकाश्च प्रिया मान्या नित्यं वै तीर्थमासनम् ॥ २५ ॥
वाहनं मस्तकेऽभ्यर्च्य यानं तदुपवेशने ।
वेदिकायां पदौ पूज्यौ एवमन्यद्यथोदितम् ॥ २६ ॥
तीर्थकाले तीर्थदेशे विशेषार्चनमाचरेत् ।
पूर्णायां गुरुवारे च गुरुचारे गुरोः स्थितौ ॥ २७ ॥
गुरोर्जन्मदिने चैव तथामूलगुरोर्गुरोः ।
सम्प्रदायगुरोश्चापि निजजन्मदिने तथा ॥ २८ ॥
संस्कारे चोत्सवे दीक्षादिने पर्वदिनेष्वपि ।
आषाढे गुरुपूर्णायां मैत्रश्रवणयोस्तथा ॥ २९ ॥
द्वादश्यां श्रावणे शुक्ले भाद्रे सोमदिने तथा ।
आश्विने श्राद्धदिवसे द्वादश्याञ्च विशेषतः ॥ ३० ॥
कार्त्तिकेऽमादिनेऽभ्यर्च्यो मार्गशीर्षेऽखिले तथा ।
माघकृष्णचतुर्दश्यां त्रिपुरारिमहोत्सवे ॥ ३१ ॥
देवर्षेर्ऋषिपञ्चम्यां पञ्चम्याञ्चास्वपे हरेः ।
चैत्रामादिवसे जन्मोत्सवे नारायणप्रभोः ॥ ३२ ॥
विशेषार्चा प्रकर्तव्या आचार्यस्य महात्मनः ।
कृते शतगुणं पुण्यं दुःखहान्यै सुखाय च ॥ ३३ ॥
विप्राणां ज्ञानवृद्धिः स्यात्क्षत्रियाणां जयो भवेत् ।
वैश्यानां धनवृद्धिः स्याच्छूद्राणां स्यादनामयम् ॥ ३४ ॥
पुंसां पौरुषसंसिद्धिः स्त्रीणां सौभाग्यमुत्तमम् ।
पुत्रवित्तैषणा लोकैषणा सिद्ध्यन्ति सर्वशः ॥ ३५ ॥
कामिनां कामसंसिद्धिर्निष्कामानां स्वतोऽखिलम् ।
रोगार्त्तो मुच्यते रोगाद् बद्धो मुच्येत बन्धनात् ॥ ३६ ॥
भयाद्विमुच्यते भीत आपद्भ्यः प्राप्त आपदः ।
वन्ध्यापि लभते पुत्रं गुर्विणी जनयेत्सुतम् । ३७ ॥

दुर्भगा सुभगा भूयात्कन्या विन्दति सत्पतिम्।
विद्यार्थी लभते विद्यां मुमुक्षुर्ज्ञानमाप्नुयात्॥ ३८॥
भक्तिधीर्लभते भक्तिं विरक्तिं च विरक्तिधीः।
पापेभ्यो मुच्यते पापी वर्द्धते पुण्यसञ्चयः॥ ३९॥
सर्वापराधैर्मुच्येत कृतैरपि हरेर्गुरोः।
गुरूपूजाफलं नालं वक्तुं देवो महीधरः॥ ४०॥
इतः परं न किमपि श्रेयसां श्रेय उत्तमम्।
गुरूपूजा प्रकर्त्तव्या साक्षाद्भक्तैर्द्विजन्मभिः॥ ४१॥
गुरुः परगुरुश्चैव परात्परगुरुस्तथा।
विलोमेन तु सम्पूज्या अनुलोमात्पृथक्स्थितौ॥ ४२॥
मन्तारं त्रायते मन्त्रो गुरूणा कृपयार्पितः।
ऋष्यादिनियमो नास्ति सिद्धे मन्त्रेऽस्य नामभिः॥ ४३॥
विद्या रहस्यविज्ञानपरमात्मप्रकाशिका।
देया च विधिना ग्राह्या सम्प्रदायागतां जपेत्॥ ४४॥
मनुर्मननतः सिद्धिं ऋष्यादिनियमैर्युतः।
पुरश्चर्य्यादिभिः सिद्धिं साधयेत्कृपया गुरोः॥ ४५॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे पूजादेरुपदेशनं नाम षष्ठोऽध्यायः॥ ६॥

---

## सप्तमोऽध्यायः।

शाण्डिल्य उवाच—

चत्वारो जन्मदिवसाश्चतुर्विंशति वासराः।

हरेर्गुरोर्जन्मदिनं पूजारम्भस्ततश्चरेत् ॥ १ ॥
तत्रादौ मण्डलं कार्य्यं सपीठमपि शोभनम् ।
पात्रन्यासं तत्र कुर्याद् द्रव्यन्यासं विशोधितम् ॥ २ ॥
नमस्कृत्य गुरुं देवं विष्वक्सेनं समर्च्य च ।
सङ्कल्पं चापराधानां मुक्तये सिद्धये चरेत् ॥ ३ ॥
गुरुर्मूलगुरुश्चापि सम्प्रदायगुरुस्तथा ।
शाखाभेदो गुरुर्मान्यो गुरवः पञ्चधा स्मृताः ॥ ४ ॥
गुरुर्मन्त्रप्रदो मूलगुरुराम्नायमूलकृत् ।
सम्प्रदायगुरुः प्रोक्तस्तदाम्नायप्रचारकः ॥ ५ ॥
शाखाभेदगुरुस्तत्र विशेषार्थप्रदर्शकः ।
विद्यातपो वृत्तवृद्धो मान्यश्चाम्नायतत्परः ॥ ६ ॥
सर्वे वाम्नायगुरवो नमस्या निजनामतः ।
ततः श्रीगुरुपादौ वा पूजयेत्पादुकायुगम् ॥ ७ ॥
वेदैर्वेदार्थमन्त्रैर्वा पौराणैरागमैरपि ।
नाममन्त्रैश्च संपूज्ये तथा लब्धोपचारकैः ॥ ८ ॥
यो ब्रह्माणं महामन्त्रं मदीयद्वारुरित्यपि ।
नमो ब्रह्मण इत्येतद्गुरुं मन्त्रैस्त्रिभिर्यजेत् ॥ ९ ॥
ब्रह्माणं ब्राह्मणं कृत्वा योग्यं वै दीक्षया मनोः ।
तस्मै ददाति सद्विद्यां ब्रजामि शरणञ्च तम् ॥ १० ॥
संसारसिन्धोः पारे यत्प्लवते प्लावयत्यमुम् ।
अपौरुषञ्च तद्दारु एनोहङ्गन्तृ तद्युगम् ॥ ११ ॥
ब्रह्मरूपश्चाग्निरूपः पृथिव्याः पादुकात्मना ।
औषधीनाञ्चोपदेशैर्वाचो मन्त्रस्वरूपतः ॥ १२ ॥
वाचस्पतिर्मन्त्रदाता विष्णुः सत्वगुणोदयः ।
सर्वप्रकारतः सर्वैर्महानाचार्य उच्यते ॥ १३ ॥
एवं मन्त्रत्रयार्थेन ज्ञातेन गुरुपादुके ।

अभ्यर्च्यतेऽतिफलदे तथैव निजमन्त्रतः ॥ १४ ॥
नमो भगवते तस्मै गुरवे बुद्धिदायिने ।
शरणागतप्रोद्धर्त्रे पुरुषोत्तमरूपिणे ॥ १५ ॥
ॐ नमो भगवद्भ्यां शरणागतसमुद्धारकाभ्यां निःशेषदोषनिर्मुक्ताशेषगुणालङ्कृतभजनानन्दनिमग्नभागवताचार्यचरणपादुकाभ्याम् ॥१६॥
मन्त्रेण चामुनाभ्यर्च्य श्रीगुरोः पादुके शुभे ।
विशेषार्चास्वष्टशतनामभिः पादुके यजेत् ॥ १७ ॥
गन्धपुष्पे धूपदीपे नैवद्यं पञ्चधार्चने ।
पाद्यार्घ्याचमस्नानानि तैः साकं नवधार्चने ॥ १८ ॥
ताम्बूलमारार्तिकञ्च पुष्पार्चा चैकधार्चने ।
नतिस्तुतिभ्रान्तिबलिर्वावेत्षोडशधार्चने (?) ॥ १९ ॥
आवाहनञ्चासनञ्च पाद्यमर्घ्यं तथाचमम् ।
स्नानं वस्त्रोपवीते च भूषागन्धाक्षतैस्तथा ॥ २० ॥
पुष्पाणि पुष्पमाला च धूपदीपार्पणक्रिया ।
नैवेद्यं चैव पानीयं ताम्बूलं चापि दक्षिणा ॥ २१ ॥
नीराञ्जनञ्च कुसुमाञ्जलिर्नतिप्रदक्षिणे ।
स्तुतिबलिश्चोपचारैः पूर्णां पूजामहोत्तमाम् ॥ २२ ॥
छत्रचामरपिच्छाद्यैस्तथा तौर्य्यत्रिकेण च ।
शङ्खघण्टादिवादित्रैरभ्यङ्गमर्द्दनादिभिः ॥ २३ ॥
उपचारविशेषैश्च चतुःषष्ठ्यवधिश्च सा ।
महोत्तमा महापूजा भक्तवर्य्यैर्विधीयते ॥ २४ ॥
आवाहनं तथा स्नानं गन्धाक्षतसमर्पणम् ।
पुष्पं धूपञ्च दीपञ्च नैवेद्यं साङ्गमेव च ॥ २५ ॥
ताम्बूलमारार्त्तिकञ्च पुष्पाञ्जलिसमर्पणम् ।
प्रदक्षिणा प्रणामानि पूजा नित्या प्रकीर्त्तिता ॥ २६ ॥
तिष्ठन् पूजादर्शनञ्च साष्टाङ्गप्रणतिस्ततः ।

प्रदक्षिणाश्चतस्रश्च तत्तीर्थग्रहणं त्रिधा ॥ २७ ॥
चरणस्पर्शनं चैव नैवेद्यग्रहणं ततः ।
उत्तीर्णगन्धमाल्यादिधारणं मूर्ध्नि मोदतः ॥ २८ ॥
एवं कृते कृता पूजा जायते प्रेक्षतामपि ।
अनयापि फलं तादृगशक्तानां नृणामिह ॥ २९ ॥
एकधा स्यात्प्रणामेन सा प्रदक्षिणया द्विधा ।
त्रिधा वादित्रनादेन चामरव्यजनार्चनैः ॥ ३० ॥
उपढौकितदानेन चतुर्थी सा प्रकीर्त्तिता ।
तत्तीर्थग्रहणेनैव पञ्चधा सा प्रदृश्यते ॥ ३१ ॥
प्रतिपत्तिः पञ्चधैवं पूजने दर्शने चरेत् ।
एवं पूजाविधिः प्रोक्तः समासेन द्विजोत्तमाः ॥ ३२ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे तुरीयांशे
पूजापटलं नाम सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ।

शाण्डिल्य उवाच—

सम्राट्सिंहासनस्थस्तु भूषितो राजभूतिभिः ।
सन्नद्धोऽसौ भवेद्राजा मान्यो धृष्योऽतिधर्षणः ॥ १ ॥
प्रविशन्ति च दिक्पालास्तस्य देहे हरिः स्वयम् ।
तस्यानुशासनं लोका मन्यन्ते दण्डधारिणः ॥ २ ॥
न सुखायाभिमानेन राज्ञः सिंहासने स्थितिः ।
प्रजानां रक्षणार्थाय धर्मस्य च प्रवृत्तये ॥ ३ ॥

आक्रुष्टो दिक्कृते राजा मध्यान्हे वा महानिशि ।
याति दुःखविमोक्षाय सुखं क सहते क्षणम् ॥ ४ ॥
एवमाचार्यः सम्राजित्स्थितसिंहासने गुरुः ।
राजदेवविभूत्याढ्या भूषितोऽर्च्यो नृणां भवेत् ॥ ५ ॥
भवेत् प्रभावसम्पन्नो विशते पुरुषोत्तमः ।
वर्त्तते शासनं तस्य अनुलङ्घ्यं मनोरिव ॥ ६ ॥
मनसा कर्मणा वाचा धर्मं यः कुरुते गुरुः ।
तस्यानुशासनं धर्म्यं स्वीकुर्वन्ति मृगा अपि ॥ ७ ॥
न सुखायाभिमानाय गुरुभिर्गृह्यते पदम् ।
उपकाराय लोकानां श्रेयसेऽत्र परत्र च ॥ ८ ॥
सिंहासने सामारूढः कृच्छ्राद्धर्मं प्रसाधयेत् ।
पूर्वेषामासनं धर्मकृते दत्तं विभावयेत् ॥ ९ ॥
मातृपितृकलत्रार्थं वृत्तिदो ना भृतस्य च ।
पञ्चधा कुलतः सिद्धः संस्कृत्या च पदेऽर्हति ॥ १० ॥
शान्तो दान्तो मृदुर्धीरो गम्भीरोऽमृतवाक् शुचिः ।
विद्याविनयवित्ताढ्य आम्नायस्थः पदेऽर्हति ॥ ११ ॥
सम्पन्नो विद्यया भक्त्या विरक्त्या च विवेकतः ।
ज्ञानविज्ञानसम्पन्नः सुशीलः पदमर्हति ॥ १२ ॥
अमानी मानदो दक्षो मैत्रः करुण आत्मवान् ।
जितेन्द्रियमनाः शक्तो निगर्वः पदमर्हति ॥ १३ ॥
भक्तिमान्भगवत्यद्धा जपकृच्च स्वधर्मकृत् ।
सन्मार्गस्योपदेष्टा च व्याख्याता पदमर्हति ॥ १४ ॥
शिष्योपदेशे कुशलः शिष्याणां हितकृद्घृणी ।
सर्वदोषविनिर्मुक्तो गुणाढ्यः पदमर्हति ॥ १५ ॥
कामः क्रोधो मदो लोभो दम्भाहङ्कृतिशाठ्यते ।
पैशुन्यं परनिन्दा च प्रमादो मोह एव च ॥ १६ ॥

परद्रोहश्चातितृष्णा ईर्ष्यासूया घृणा क्षमा ।
जिह्वोपस्थजयो लौल्यं परनिन्दात्मसंस्तुतिः ॥ १७ ॥
एवमादिमहादोषो यस्य न स्पृशते धियम् ।
सम्प्रदायागतो भव्य आचार्यपदमर्हति ॥ १८ ॥
वेदमूर्त्तिर्भवेत्पीठं यन्त्राढ्यं मन्त्रशोधितम् ।
तत्वयोगासनं भव्यमासनं संविदात्मकम् ॥ १९ ॥
छत्रं तत्कर्ममीमांसां साङ्ख्ययोगौ च चामरे ।
भक्तिज्ञानांशुकश्चायं वेदान्ताङ्गैरलङ्कृतः ॥ २० ॥
तर्कागमप्रतीहारः काव्यैः संस्तूयते गुरुः ।
शङ्खघण्टादिनिनदैर्धर्मः संपोष्यते सुरैः ॥ २१ ॥
पताकया ध्वजेनापि शरण्यानां समाह्वयः ।
शङ्खचक्राद्यायुधानि नृणामभयदानि च ॥ २२ ॥
तालवृन्ते च पिच्छे च षडङ्गानि च दर्पणे ।
ब्रह्मज्योतिः पराज्योतिर्घृततैलप्रदीपके ॥ २३ ॥
भक्तिज्ञानात्मकाम्नायौ आचार्यस्य च पादुके ।
तदागमं नामरूपमर्थरूपः स्वयं गुरुः ॥ २४ ॥
विद्यापरिकरैर्युक्तोऽविद्यामाक्रम्य तिष्ठति ।
शब्दब्रह्मपरब्रह्मनिष्णातो देशिको मतः ॥ २५ ॥
तपो विवेको वैराग्यं योगो भक्तिश्च पञ्चमी ।
इयं विद्या पञ्चपर्वा शिखासूत्रस्रगादिगा ॥ २६ ॥
चार्वाकास्सुगता जैना बाह्या म्लेच्छमुखास्तथा ।
पञ्चमः पञ्चमास्ते तु मौढ्यविद्याऽध्वरूपिणः ॥ २७ ॥
निषिद्धार्थेषु वेदार्थं पाखण्डा योजयन्ति ये ।
तानि पापस्य खण्डानि कापालाद्यागमानि च ॥ २८ ॥
पाशब्देन त्रयो वेदास्तेषां ये मूलखण्डकाः ।
पाखण्डास्तेन बौद्धाद्या नास्तिको न्यैकसेोऽपिधृक् (?) ॥ २९ ॥

धर्मिष्ठं सुचरित्रं च विप्रं धर्मप्रवर्त्तकम्।
आचार्य्यं मानयेद्राजा धर्मार्थमभियोजयेत्॥ ३०॥
सम्प्रदायागतानार्यान् लोके धर्मप्रवर्त्तकान्।
सत्कृत्य दानमानैस्तान् राजा धर्मेऽधि योजयेत्॥ ३१॥
लोकवेदबहिर्भूतं चारयन्ति च ये मतम्।
नूतनञ्चोपजीव्यार्थं तान्पाषण्डान्निवारयेत्॥ ३२॥
आचार्यो वेदवत्पूज्यः प्रणामैर्दण्डवत्कृतैः।
सदाज्ञापालने राज्ञा पादसंवाहनादिभिः॥ ३३॥
आचार्यस्य गुणाः प्रेद्याः शिष्यस्यापि च ते तथा।
अलक्षणः कृतघ्नश्च शिष्यः कार्यो न देशिकैः॥ ३४॥
दोषाणां छादनाच्छात्रो गुणानां सम्प्रकाशनात्।
शिष्योऽनुशासनान्मन्त्रैरन्तेवास्यपि सेवया॥ ३५॥
दासवत्सेवते चान्तेवासी विद्यैकसंग्रहः।
स्वकुटुम्बः कुटुम्बेन सहितो हितमाचरेत्॥ ३६॥
एवं शिष्यस्तथा छात्रः पुत्रवन्मित्रवद्भवेत्।
देववत्पूजयेदेनं मनसा कर्मणा गिरा।
प्रातर्ध्यानं प्रकुर्वीत मध्यान्हे च निशामुखे।
पतिव्रतेव सेवेत त्यक्त्वा धर्मान्तरं निजम्॥ ३८॥
एककालं द्विकालं वा त्रिकालं वा समर्चयेत्।
धर्मार्थकामनिष्ठेऽस्मिन् पादुकामस्य पूजयेत्॥ ३९॥
अभावे तनयं पत्नीं शिष्यादीन्पूजयेद्‌ गुरोः।
आह्निकात्प्रथमं भक्त्या अह्निकान्तेऽपि वा यजेत्॥ ४०॥
अधरारणिः शिष्यः स्यादाचार्यश्चोत्तरारणिः।
मन्थानदण्डो मन्त्रः स्याद्विचारो मन्थदामिका॥ ४१॥
विद्यासमुदयश्चाग्निर्मखमभ्यसनं स्मृतम्।
सध्रीचीनं प्रतीचीनं गन्तव्यं तेन कर्मणा॥ ४२॥

उपनीतो वाधिकारी स्याद्दीक्षायामुपदेशके ।
नोपनीतोऽपि गर्भस्थः प्रह्लादोऽनुग्रहे यथा ॥ ४३ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे तुरीयांशे
परिकरस्वरूपनिरूपणं नामाष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ।

शाण्डिल्य उवाच—

बहुपौरुषतोऽतीतसंस्काराणां द्विजन्मनाम् ।
आचार्य आचरेत्पूर्वं संस्कृतिं तां वदाम्यहम् ॥ १ ॥
स वित्तार्द्धेन पादेन तदर्द्धेनातिशक्तितः ।
प्रायश्चित्तं कारयेद्वै वपनादिपुरःसरम् ॥ २ ॥
कुमारस्योपनयनं गर्भाधानादिभिश्चरेत् ।
उपदेशश्च गायत्र्यास्तस्य चैवाश्रमान्तरम् ॥ ३ ॥
प्रायश्चित्तन्तु लुप्तानां संस्काराणां क्रिया ततः ।
पटगर्भपिधानाद्वा प्रायश्चित्तिश्च केवला ॥ ४ ॥
सङ्कल्पं प्रथमं कुर्यात्ततः पुण्याहवाचनम् ।
विष्वक्सेनं समर्च्यैव गणेशादिप्रपूजनम् ॥ ५ ॥
ग्रहशान्तिस्ततः कुर्यात्तन्त्रनान्द्यर्चनं भवेत् ।
कुलदेवार्चनं तत्र मण्डपादि यथोदयम् ॥ ६ ॥
ये हि त्रयोदशमखो बटोः क्षौराभिषेचनम् ।
ततोपवीतं सूत्रोक्तं कारयेद्वै द्विजन्मनाम् ॥ ७ ॥

विप्राय देया गात्री त्रिष्टुब्वै बाहुजन्मने ।
वैश्याय जगती देया इति प्राह पराशरः ॥ ८ ॥
सर्वेषामेव गायत्री प्राह पारस्करः पुरा ।
अतीतसंस्कृतीनां वै नैतन्मम मतं भवेत् ॥ ९ ॥
युगान्तरे तु सा चेष्टा पारम्पर्यादपि क्वचित् ।
अलाभे तु प्रकर्त्तव्या स्वेष्टार्णैस्तत्पदत्रया ॥ १० ॥
गृहिणो वैदिकी नैषा वर्णित्वं स्याद्विलोमतः ।
पतितः स्यात्तया चायं देया तं वाऽऽगमोदिता ॥ ११ ॥
विप्रस्य ब्रह्मगायत्री क्षत्रियस्य विवस्वतः ।
वैश्यस्य वैष्णवी योग्या रौद्री सा कुण्डगोलयोः ॥ १२ ॥
सर्वेषामेव वर्णानां गायत्री पौरुषोत्तमी ।
अतीतसंक्रियाणां सा योग्या वर्णाश्रमार्थदा ॥ १३ ॥
द्विजोऽनया संस्कृतः स्यात्स्मार्त्ते धर्मेऽर्चने हरेः ।
श्राद्धे दाने प्रतिष्ठायां तीर्थे पौराणिकेऽर्हितः ॥ १४ ॥
मन्त्रैर्वेदार्थमन्त्रैश्च पौराणै रागमोदितैः ।
स्नानसन्ध्यादिषट्कर्म तेषां कार्यं स्मृतं बुधैः ॥ १५ ॥
संस्कारा ब्राह्मणद्वारा धर्माः श्राद्धादयः परे ।
कारयेद्वा स्वयं कुर्यान्मन्त्रांस्तत्र गुरुः पठेत् ॥ १६ ॥
विष्वक्सेनं प्रपूज्यैव गणेशाद्यर्चनं चरेत् ।
विष्णुं गृहेशं कालिन्दीं मातृकां क्षत्रपं गिरिम् ॥ १७ ॥
अधिदेवं वासुदेवं कुम्भे सङ्कर्षणं यजेत् ।
प्रद्युम्नो मण्डले पूज्योऽनुरुद्धस्तथाऽनले ॥ १८ ॥
प्रजापतिऋृषिस्तस्य गायत्री छन्द इष्यते ।
एतस्य मन्त्रराजस्य देवता पुरुषोत्तमः ॥ १९ ॥
पिण्डबीजं भवेद्बीजं लक्ष्मीतारः स्मरस्तथा ।
नमः स्वाहा च वा शक्तिर्नियोगो द्विजताप्तये ॥ २० ॥

दत्तोपवीतं मन्त्रेण गुरुरेनं मनुं ददेत् ।
दक्षिणे श्रवणेऽर्भस्य स चाप्योपायनं चरेत् ॥ २१ ॥
गोपालो मा च गोविन्दः कृष्णश्चेति पदत्रयम् ।
विद्महे धीमहि प्रचोदयादन्तैर्मनुर्भवेत् ॥ २२ ॥
ऋष्यादि च कराद्यङ्गन्यासो मन्त्रपदार्णयोः ।
स कुर्याद् गुरुणा प्रोक्तो ध्यानञ्चैवार्थचोदितम् ॥ २३ ॥
पूजयेद् देवदेवेशं गृह्णीयादाशिषं गुरोः ।
स्वसर्वस्वेन शक्त्या वा आचार्य्यं तोषयेद्धनैः ॥ २४ ॥
विप्राश्च दानमानाभ्यां दीनानन्यांश्च तोषयेत् ।
इत्थं कृते द्विजातिः स्याद्वल्लभः श्रीपतेरपि ॥ २५ ॥
गुरोरनुग्रहाच्छिष्यो भुक्तिं मुक्तिञ्च विन्दति ।
समर्चनीयः सर्वेषां विजयी हरिभक्तिमान् ॥ २६ ॥
मन्त्रराजस्य दीक्षैव प्रायश्चित्तपुरःसरा ।
गृहाश्रमेऽधिप्राप्तानां व्रतेन रहितात्मनाम् ॥ २७ ॥
तावताप्यधिकारी स्याच्छ्राद्धे दानादिकर्मणि ।
हरिभक्तौ च वेदान्तभावार्थस्य परिग्रहे ॥ २८ ॥
धारयेदुपवीतं स कुर्यात्पौराणिकीं कथाम् ।
गुरोर्भक्त्या हरेर्भक्त्या द्वितीया जातिरिष्यते ॥ २६ ॥
पञ्चमाद्द्वादशाब्दान्तं कन्यकाया बटोरपि ।
कालशुद्धिप्रतीक्षा स्यात्परत्रावश्यकी न सा ॥ ३० ॥
गुरौ मूढे सिते मूढे दूषिते समयान्तरे ।
अलभ्यगुरुलाभे तु न दोषोऽर्णपरिग्रहे ॥ ३१ ॥
ग्रहणे भास्करस्यापि तीर्थे पुण्ये महोत्सवे ।
मन्त्रराजो गृहीतव्यो न तत्र विधिविस्तरः ॥ ३२ ॥
अनन्यगतिकः शिष्योऽनुग्राह्यो गुरुणा सदा ।
न तत्र नियमः कश्चिद्विधेर्वा देशकालयोः ॥ ३३ ॥

प्रायश्चित्तापवादाभ्यां ग्राह्योऽर्णः समयं विना।
अनन्यगतिके शिष्ये गुरौ चैष विधिः स्मृतः॥ ३४॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे तुरीयांशे उपनीतोपदेशनं नाम नवमोऽध्यायः॥ ६॥

---

## दशमोऽध्यायः।

शाण्डिल्य उवाच--

मन्त्रे गुरौ तथा देवे अधिभूताधिवस्तुनि।
एकताभावना युक्ता तदैव सकलर्द्धयः॥ १॥
प्रतिपाद्यो भवेद्देवो मन्त्रश्च प्रतिपादकः।
तयोरैक्यं द्वयोरूपं गुरुर्धत्ते करोति च॥ २॥
भेदो न वास्तवं वस्तुपार्थक्ये पार्थ एव सः।
अर्थरूपो नवा धर्मस्तस्माद्ब्रह्मैव केवलम्॥ ३॥
ब्रह्मातिरिक्तो नैवास्ति किञ्चिद्वै ब्रह्मदर्शने।
सर्वं खल्विदं ब्रह्म इति तत्वनिदर्शनम्॥ ४॥
नात्र बाधो भवेद् बाध्यबाधको बोधकश्च कः।
सर्वं ब्रह्मात्मकं वस्तु निर्भ्रान्तं भाति भास्यति॥ ५॥
विकाराश्च प्रकाराश्च निराकारास्तथा कृतिः।
ज्ञानमेव पराचीनं पृथग्भूतं निजेच्छया॥ ६॥
अभाववति यो भावो प्रतीतः स मृषोच्यते।
सर्वभावात्मके तस्मिन्नभावः कस्य सम्भवेत्॥ ७॥
सुवर्णं लौकिकं यस्मात्कटकादिश्च तन्मयः।

प्रकाराश्च विकाराश्च पार्थक्येन विभान्ति ते ॥ ८ ॥
सच्चिदानन्दमात्रेऽस्मिन्नामरूपात्मके भवे ।
प्रकाराश्च विकाराश्च ब्रह्मरूपा न ते पृथक् ॥ ९ ॥
युक्तितो निर्मितं नित्यं नियतञ्च न वा भ्रमः ।
आकस्मिकश्चापतितो भ्रमो भावोऽप्यभाविनि ॥ १० ॥
आकाशे नीलिमा नित्या नियता च प्रतिध्वनिः ।
कृतो रागोंऽशुके चाब्जं युक्तितः किं भ्रमात्मकम् ॥ ११ ॥
पीतिमाब्जे दोषजन्या सितायां कटुता तथा ।
दोषजन्यापि न मृषा तथा मरुमरीचिका ॥ १२ ॥
केनचित्स्वगुणेनैव सूक्ष्मैरवयवैरपि ।
यश्च यद्विद्यते वस्तु तस्य तत्र भ्रमो भवेत् ॥ १३ ॥
सादृश्यात्स्थौल्यदीर्घेण गुणेऽस्ति च फणी स्त्रयम् ।
शुक्तौ मरीचिकायाञ्च रजतांशास्तथाब्लवाः ॥ १४ ॥
कार्यात्तमं प्रतीतं च स्वल्पस्थाय्यतिसूक्ष्मकम् ।
मृषेति प्रोच्यते वस्तु द्वैश्चासदिहोच्यते ॥ १५ ॥
सत्यं चैवानृतं चैव श्रुतौ ब्रह्मेति तद्द्रुतम् ।
सत्यं पुनश्च तत्प्रोक्तं सत्ये सत्यं ततोऽखिलम् ॥ १६ ॥
ईश्वरः सत्यसङ्कल्पस्तस्य सङ्कल्पतां जगत् ।
सत्यमेवेति तन्नाम रूपं सत्यं च मुण्डके ॥ १७ ॥
तवास्मीति महामन्त्रो मूलमन्त्रेण संयुतः ।
दासभावनया सख्यं तादात्म्यञ्च प्रयच्छति ॥ १८ ॥
श्रुते च ब्रह्म मे दासाः कितवा इति (?) कीर्त्तितम् ।
सुराश्च तत्परा दासाः कितवाचारिणोऽसुराः ॥ १९ ॥
अष्टाक्षरो महामन्त्रः कृतार्थस्तेन संस्कृतः ।
प्रपन्नं शरणं विष्णोः संस्मृतिं यात्यसौ कथम् ॥ २० ॥
मन्त्रराजस्य सिद्धस्य हरेर्नामात्मकस्य च ।

ऋष्यादिर्नियमो नास्ति पुरश्चर्याऽध्वरादि(पु)कम् ॥ २१ ॥
सिद्धौषधं यथा लोके नानुपानमपेक्षते।
विश्वासार्थं गुरुर्वन्द्यस्तथाङ्गानि महामनुः ॥ २२ ॥
गोपालस्य महामन्त्रो लघुमन्त्रो दशाक्षरः।
अन्येऽपि तस्य मनवो मुक्तिं भुक्तिं ददन्ति ते ॥ २३ ॥
प्रजापतिर्ऋषिश्चाद्ये गायत्रं छन्द ईर्यते।
देवताऽसौ स्वयं देवो बीजं मातरमन्मथौ ॥ २४ ॥
स्वाहा नमस्तथाशक्तिर्विनियोगः स्ववाञ्छिते।
पदैः पादैर्भवेन्न्यासो वर्णैर्वापि सबीजकैः ॥ २५ ॥
आचक्राद्यैः पृथङ्मन्त्रैः षडङ्गेनापि पूर्णता।
ध्यानञ्चाभिमतं कुर्यात्कार्यानुमत एव वा ॥ २६ ॥
अस्य जापेन संसिद्धो निग्रहानुग्रहः क्षमः।
हरिं वशयति क्षिप्रमाचार्यत्वं च गच्छति ॥ २७ ॥
अस्य वंशे प्रसूयन्ते आचार्यास्ते भवन्ति हि।
हरेर्भक्ता गुरोर्भक्ता ब्राह्मणा मन्त्रधारिणः ॥ २८ ॥
एवं दशाक्षरे मन्त्रे नारदः पङ्क्तिरेव च।
मन्त्राभ्यां संस्कृतो वन्द्यः सर्वेषां नास्य कोऽपि हि ॥ २९ ॥
विद्यागुरुर्मन्त्रगुरुः पीठेशाचार्य एव च।
पीठस्थश्चापि ते वन्द्या आसनाद्यैर्यथोचितैः ॥ ३० ॥
विद्वांसो ब्राह्मणा मान्या वैष्णवा यतयोऽन्यदा।
यौनविद्यादिसम्बन्धैर्माननना शास्त्रसम्मता ॥ ३१ ॥
न चात्र हिंसालेशोऽपि कामक्रोधसमुद्भवः।
श्रवणं कीर्त्तनं विष्णोः श्रवणादि प्रसिद्ध्यति ॥ ३२ ॥
अयञ्च ब्राह्मणैर्जप्यो द्विजैर्वा संस्कृतैरपि।
नमोऽन्तोऽयं चैकजातैर्योषिद्भिरपि जप्यते ॥ ३३ ॥
गाणेशेभ्यश्च सौरेभ्यः शाक्तेभ्योऽपि विशेषतः।

शैवेभ्यो वैष्णवेभ्यश्च मन्त्रराजो विशिष्यते ॥ ३४ ॥
मन्त्रराजात्परो मन्त्रो महाविष्णोरयं मतः ।
अस्मात्परो नास्ति मन्त्रो देवः श्रीपुरुषोत्तमः ॥ ३५ ॥
नमोमुखश्च वेदोक्तो नमोऽन्तश्चागमोदितः ।
हिरण्यगर्भो गायत्रं तारश्चैव नमस्तथा ॥ ३६ ॥
विनियोगः षडङ्गानि वर्णैर्न्यासो यथायथम् ।
ध्यायेद्देवं महाविष्णुं पुरुषं विश्वतोमुखम् ॥ ३७ ॥
जप्तव्यः केवलो वापि सिद्धे न्यासादिकं वृथा ।
विश्वासाय च मूढानां तदर्थायार्चिनामपि ॥ ३८ ॥
नारायणो महामन्त्रः साध्यो नारायण ऋषिः ।
शेषं यथोक्तमेवास्य ध्यानं भुजगशायिनः ॥ ३९ ॥
द्वादशार्णो महामन्त्रो नारदो हि ऋषिः स्मृतः ।
तारो नमो बीजशक्तिः षडङ्गन्यासकल्पना ॥ ४० ॥
ध्यायेदभिमताकारं वासुदेवं चतुर्भुजम् ।
सिंहासने समासीनं मुक्तिभुक्तिप्रदायकम् ॥ ४१ ॥
नारसिंहो महामन्त्रो मन्त्रराजः प्रकीर्त्तितः ।
प्रजापति ऋषिस्तस्य छन्दोऽनुष्टुप्प्रदृश्यते ॥ ४२ ॥
स्वाहैव शक्तिः क्ष्रौं बीजं देवताऽभयदो हरिः ।
ध्यायेदभिमताकारं लक्ष्म्या सौम्यञ्च (भूषित) भीषणम् ॥ ४३ ॥
मन्त्रपादैः पदैर्वाणैरङ्गैर्वा न्यासकल्पना ।
अस्य जापेन संसिद्धोऽप्रधर्ष्यः स्यात्सुरैरपि ॥ ४४ ॥
उद्गिरन् प्रणवोद्गीथं हायग्रीवो महामनुः ।
स्त्रौंबीजेन सम्पन्नः स्वाहाशक्तिसमन्वितः ॥ ४५ ॥
प्रजापतिऋषिस्तस्य छन्दोऽनुष्टुप्समीरितः ।
विनियोगस्तु बोधार्थे विद्याकामेन जप्यते ॥ ४६ ॥
पादैः पदैस्तथा वर्णैर्न्यासः कार्यो यथोदितः ।

न्यासानां पुष्कलत्वे तु फलानां भूरितोदिता ॥ ४७ ॥
ध्यायेच्छ्वेताम्बुजे श्वेतं हयचक्रं चतुर्भुजम् ।
वराभयकरं देवं पुस्तकाक्षवटीधरम् ॥ ४८ ॥
रामतारकमुख्याश्च मनवो ये हरिप्रियाः ।
तेऽपि जप्या यथाकार्यमाचार्येण महात्मना ॥ ४९ ॥
जपात्सिद्धिर्जपात्सिद्धिर्जपात्सिद्धिर्न संशयः ।
जपयज्ञो हि यज्ञानां विष्णुरेवोत्तमश्च सः ॥ ५० ॥
न चात्र हिंसालेशोऽपि कामक्रोधसमुद्भवः ।
स्मरणं कीर्तनं विष्णोः श्रवणादि प्रसिद्ध्यति ॥ ५१ ॥
तदीयस्य जपः प्रोक्तः सा स्यात्स्वात्मसमर्पणा ।
तस्मात्समर्पणं कार्यं पुत्रदारधनादिकम् ॥ ५२ ॥
कथं स्याद्देहनिर्वाहो देवस्वानुपजीविने ।
देवस्वमुपजीवस्तु भासः काकोऽपि जायते ॥ ५३ ॥
यद्दत्तं सुरसं नीरैः सङ्कल्प्य हरये स्वयम् ।
तस्योपभोगो दुष्टोऽस्ति लोके वेदेऽपि गीयते ॥ ५४ ॥
इतिचेन्न तथा लोके दत्ता कन्या पितुर्गृहे ।
कुरुते सर्वकार्याणि पिता किं तेन दुष्यति ॥ ५५ ॥
श्राद्धे संकल्पितं पूर्वं क्रमशो विनियुज्यते ।
भुज्यते चावशिष्टान्नं यजमानैस्तदाज्ञया ॥ ५६ ॥
सत्रे मखे च तीर्थे च इष्टापूर्त्तादिकर्मणि ।
नियुज्यते च क्रमशो वित्तं चैवोपभुज्यते ॥ ५७ ॥
ब्रह्मचारी च गुरवे भिक्षान्नं सम्प्रयच्छति ।
दत्तान्नं गृह्यते तेन निर्वाहाय निजात्मनः ॥ ५८ ॥
सर्वमेधे च सर्वस्वदाने चात्मोपजीवनम् ।
क्रीयते यजमानेन ततः किं तेन दूषणम् ॥ ५९ ॥
शरणागतधर्मोऽयं यथा वै शरणागतः ।

पालकाय निवेद्य स्वं तदंशेनैव जीवति ॥ ६० ॥
वचनेनैव दोषः स्याद् गुणः स्याद्वचनेन च ।
अर्पयेन्निजसर्वस्वं जीवेत्तेनैव दासवत् ॥ ६१ ॥
यत्करोषि यदश्नासि तत्कुरुष्व मदर्पणम् ।
इत्याह भगवान्साक्षात्तेन जीवन्न दुष्यति ॥ ६२ ॥
निर्वाहो यावदर्थेन तत्स्वं प्राणवतां स्वयम् ।
धर्मः प्राणधृतौ देवाराधनं तेन सिद्ध्यति ॥ ६३ ॥
नैवेद्यं चैव ( दुग् ) धादेः पाद्यादेः प्रतिपत्तये ।
उपभोगो यथा शास्त्रे तथा तस्यार्पितस्य च ॥ ६४ ॥
अहन्तां ममतां त्यक्त्वा सर्वस्वेन हरिं यजेत् ।
जीवेत्तदुपभुक्तेन अर्पितात्मा तु वैष्णवान् ॥ ६५ ॥
अयं प्रकारो मुख्योऽस्ति गौणपक्षात्परो मतः ।
अम्बरीषादिवद्भक्तः सिद्धो वल्ल्यादिवद्भवेत् ॥ ६६ ॥
इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे मन्त्रोपदेशः
नाम दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः ।

शाण्डिल्य उवाच--

आम्नायाभिगतानां च स्वाचार्याणां महात्मनाम् ।
स्तोत्रावलिं प्रवक्ष्यामि श्रेयसे भक्तये गुरोः । १ ॥
निरञ्जनं नित्यमनन्तमाद्यम् ।
यन्नेति नेति श्रुतिसंमतं च ॥

तद्धाम दैवं परमं परेभ्यः ।
वन्दे मुकुन्दं पुरुषोत्तमं तम् ॥ २ ॥

अणोरणीयान्महतो महीयान् ।
दूरेऽप्यदूरे बहिरन्तरं च ॥
विरुद्धधर्माश्रयमाप्तकामम् ।
वन्दे मुकुन्दं पुरुषोत्तमं तम् ॥ ३ ॥

परास्य शक्तिः सहजाः स्वभावाः ।
छाया च मायाद्भुतकार्यकर्त्री ॥
यद्विश्वमानन्दरसात्मरूपम् ।
वन्दे मुकुन्दं पुरुषोत्तमं तम् ॥ ४ ॥

रिरंसया यः परिपूर्णकामः ।
निजात्मरूपामकरोत्स्वलीलाम् ॥
नित्यामखण्डामगुणां गुणाढ्याम् ।
वन्दे मुकुन्दं पुरुषोत्तमं तम् ॥ ५ ॥

यो निर्गुणः प्राकृतसद्गुणश्च ।
निजात्मकामोऽपि सदाप्तकामः ॥
कामं द्विधासीद्बहुधा रमामि ।
वन्दे मुकुन्दं पुरुषोत्तमं तम् ॥ ६ ॥

ऋषिस्वरूपैर्विविधैः स्वरूपैः ।
तपःप्रसिद्धैर्व्रजभृद्वधूनाम् ॥
यूथैरसङ्ख्यै रमते स्वसिद्धैः ।
वन्दे मुकुन्दं पुरुषोत्तमं तम् ॥ ७ ॥

अकारणं कार्यकरी यदृच्छा ।
विधाय तां दोषगुणैर्विमुक्तः ॥
सृष्टिं विचित्रामवलोकते यः ।
वन्दे मुकुन्दं पुरुषोत्तमं तम ॥ ८ ॥

शुद्धं तथाद्वैतमनन्तरूपम् ।
जगत्स्वरूपेण च विद्धमेकम् ॥
न चान्ययोगोऽत्र न संप्रयोगः ।
वन्दे मुकुन्दं पुरुषोत्तमं तम् ॥ ९ ॥
स्तोत्रं यदेतत्पुरुषोत्तमस्य ।
निरूपितं यद्धरणीधरेण ॥
दधाति वाचि प्रशृणोति वा यः ।
स याति देवं पुरुषोत्तमं तम् ॥ १० ॥
इति श्रीपुरुषोत्तमस्तोत्रम् ।
नारायणो यो नरभूजलायः ।
नारायणोऽज्ञाननिवर्तनेन ॥
नारायणोऽन्तर्यमनेन पुंसाम् ।
तमादिनारायणदेवमीडे ॥ ११ ॥
पुराणवर्णाः पुरुषोत्तमस्य ।
पुराणमन्त्रः पुरुषः पुराणः ।
दधार योऽसौ परिपूर्णरूपः ।
तमादिनारायणदेवमीडे ॥ १२ ॥
मन्त्रात्मको मन्त्रगुणैस्तुतो यः ।
यस्सर्वमन्त्रान्प्रददौ मुनिभ्यः ॥
मन्त्राधिदेवोऽखिलमन्त्रगम्यः ।
तमादिनारायणदेवमीडे ॥ १३ ॥
निश्वासभूता निगमालिरस्य ।
प्रश्वासरूपागमपङ्क्तिरिद्धा ॥
समस्तशास्त्राणि च यस्य वाचः ।
तमादिनारायणदेवमीडे ॥ १४ ॥
यस्याष्टवर्णं मनुराजमेकम् ।

समाश्रितस्संसृतिपारमेति ॥
विधेर्विधानं न ह्यत्र किंचित् ।
तमादिनारायणदेवमीडे ॥ १५ ॥
यो वासुदेवः खलु वामदेवः ।
यो देवदेवः प्रथमं ततोऽभूत् ॥
पार्श्वद्वयादस्य च वक्षसश्च ।
तमादिनारायणदेवमीडे ॥ १६ ॥
शेषाय देवाय विशेषभर्त्रे ।
अशेषमन्त्रान्प्रददौ सशेषान् ॥
निःशेषतः क्लेशनिवृत्तयेऽसौ ।
तमादिनारायणदेवमीडे ॥ १७ ॥
गुरुर्गुरूणामृषभो ऋषीणाम् ।
यो देवदेवः खलु देवतानाम् ॥
यश्चेश्वराणां परमेश्वरोऽसौ ।
तमादिनारायणदेवमीडे ॥ १८ ॥
इति नारायणस्तोत्रं भणितं त्रिपुरारिणा ।
पठनाच्छ्रवणात्सद्यो ह्यग्र्यां शुद्धिं प्रयच्छति ॥ १९ ॥

इति नारायणस्तोत्रम् ।

रसात्मा परात्मा पुरुषोत्तमो यः ।
निजोत्तारणायैव नारायणाय ॥
महामन्त्रराजं प्रपेदे यतोऽयम् ।
तमीशं फणीशं गुरुं शेषमीडे ॥ २० ॥
सहस्राननैर्वाक्सहस्रद्वयेन ।
सदा कीर्तयन्तं हरेः कीर्तिमेव ॥
गृणन्तं श्रुतिभ्यो मतं भक्तिकाण्डम् ।
तमीशं फणीशं गुरुं शेषमीडे ॥ २१ ॥

विरिञ्चेः कुमारान्प्रति प्राह पूर्वम् ।
नृपं चित्रकेतुं प्रति प्रीतिपूर्वम ॥
हरेर्भक्तिशास्त्रं मनुर्यश्च मह्यम् ।
तमीशं फणीशं गुरुं शेषमीडे ॥ २२ ॥
सदा योगिनो भोगिनो यं भजन्ते ।
यथायोगमेषां ददात्यर्थसिद्धिम् ॥
समृद्धिं करोति प्रियस्यैव विष्णोः ।
तमीशं फणीशं गुरुं शेषमीडे ॥ २३ ॥
त्रयीयोगवाग्यो गवां चाप्रकाशः ।
हरेर्भक्तियोगस्य वक्ता गुणानाम ॥
समस्तैर्नुतो योगिभिर्योगगम्यः ।
तमीशं फणीशं गुरुं शेषमीडे ॥ २४ ॥
अनन्तो हरेर्वल्लभामुत्तमाङ्गे ।
अनन्ताङ्घ्रिजामापगां यश्च धत्ते ॥
अनन्तस्ततोऽनन्तदेवाश्रयो यः ।
तमीशं फणीशं गुरुं शेषमीडे ॥ २५ ॥
अशेषे विलीने लये शिष्यते यः ।
सुपर्यङ्कतां याति संवर्तसिन्धौ ॥
मुरारेः प्रियाणामुपज्ञं गुरूणाम् ।
तमीशं फणीशं गुरुं शेषमीडे ॥ २६ ॥
यतो वासुदेवेऽभिप्रद्युम्नमन्तः ।
समाकर्षयच्चानिरुद्धं निरोद्धुम ॥
ततश्चाख्यया याति संकर्षणो यः ।
तमीशं फणीशं गुरुं शेषमीडे ॥ २७ ॥
भुजङ्गाङ्गिनो गीर्गिरीशेन गीता ।
भुजङ्गाङ्गपर्यङ्कभाजः प्रियस्य ॥

भुजङ्गप्रियस्य प्रियायैव भूयात्।
भुजङ्गप्रयाता भुजङ्गप्रयातैः ॥ २८ ॥

इति श्रीशेषस्तोत्रम्।

नमामोऽसुरारेस्सुरारेर्गणाग्रयम्।
नमामोऽन्धकारिं मखारिं निजारेः (रिम) ॥
शिरो गाङ्गवारिप्रचारक्षमोऽस्य।
नमामः पुरारिं मुरारेः प्रियं तम् ॥ २९ ॥
मुखैः पञ्चभिः पञ्चभिः पञ्च षष्ठम्।
त्रयीसाङ्ख्ययोगाङ्गमारण्यकानि ॥
जगौ भक्तिकाण्डं हरेस्सौख्यभाण्डम्।
नमामः पुरारिं मुरारेः प्रियं तम् ॥ ३० ॥
हरेरङ्घ्रितो गाङ्गवारि प्रसूतम्।
कपर्दे कपर्दे कपर्दीचकार ॥
अखर्वं च गर्वं हरन् जह्नुजायाः।
नमामः पुरारिं मुरारेः प्रियं तम् ॥ ३१ ॥
गुरूणां गुरुर्यो मतो नारदेन।
उपज्ञोऽपि शिष्यः परः पूरुषस्य ॥
तृतीयं गुणं यो नियन्तुं नियन्ता।
नमामः पुरारिं मुरारेः प्रियं तम् ॥ ३२ ॥
समस्तागमामूलमन्त्राश्च सर्वे।
यतः संप्रसूता यतः सिद्धिमन्त्राः ॥
पुराणार्णमाद्यं दशार्णं जपन्ते।
नमामः पुरारिं मुरारेः प्रियं तम् ॥ ३३ ॥
सदाम्नायमाद्यं जगौ नारदाय।
विकुण्ठाधिनाथादवाप्यैव पूर्वम् ॥
ततः शेषतः शेषधर्मं दधार।

नमामः पुरारिं मुरारेः प्रियं तम् ॥ ३४ ॥
कृपातो गतो व्यापिवैकुण्ठभाजाम् ।
समीपे ददर्श व्रजेशं रसेशम् ॥
ततोऽनुगृहीतोऽखिलैर्भक्तिवर्यैः ।
नमामः पुरारिं मुरारेः प्रियं तम् ॥ ३५ ॥
स्थितो यो निदेशाय सिंहासने स्वे ।
मणिव्रातकीर्णे मुनिव्रातमध्ये ॥
उपज्ञो गुरुर्ज्ञानदानाय लोके ।
नमामः पुरारिं मुरारेः प्रियं तम् ॥ ३६ ॥
व्यासेन कथितं पुण्यं त्रिपुरारेर्महास्तवम् ।
कीर्तयेच्छृणुयाद्यस्तु स मुरारेः प्रियो भवेत् ॥ ३७ ॥

इति श्रीत्रिपुरारिस्तोत्रम् ।

यो वेदगर्भस्य च गर्भजातः ।
न गर्भजातः खलु वेदगर्भः ॥
देवर्षिवर्यं हरिदासवर्यम् ।
आदेशिकानां प्रवरं तमीडे ॥ ३८ ॥
गुरोः पुरारेश्चरणाब्जसेवया ।
अवाप यो मन्त्रवरं मुरारेः ॥
कृष्णाय योऽनुग्रहतो ददौ तम् ।
आदेशिकानां प्रवरं तमीडे ॥ ३९ ॥
नारं तमो यो द्यति नारदोऽतः ।
देवर्षिवर्योऽभिमतः सुराणाम् ॥
राजर्षिविप्रर्षिमहर्षिवन्द्यः ।
आदेशिकानां प्रवरं तमीडे ॥ ४० ॥
नारायणो येन प्रसादितोऽद्धा ।
पारायणं कर्तुमना जनानाम् ।

जगौ निजं नारदपञ्चरात्रम् ॥
आदेशिकानां प्रवरं तमीडे ॥ ४१ ॥
शेषादिशेषं हरेर्भक्तिकाण्डम् ।
लेभे तमाराध्यपदं प्रसाद्य ॥
प्रकाशयामास हिताय लोके ।
आदेशिकानां प्रवरं तमीडे ॥ ३३ ॥
हरेर्मनोमूर्तिरसौ मुनीनाम् ।
मनोनियन्ताखिलमूर्तिभाजाम् ॥
मच्चेतसो यो मुदमातनोति ।
आदेशिकानां प्रवरं तमीडे ॥ ३४ ॥
सनत्कुमारैरुपशिक्षितो यः ।
योऽशिक्षयद्दक्षकुमारमुख्यान् ॥
समुद्धृता दैत्यपतेः कुमाराः ।
आदेशिकानां प्रवरं तमीडे ॥ ३५ ॥
समागतः पीठवरेनिवेशितः ।
व्यासाय यो भागवतागमं ददौ ॥
जहार यस्तत्खिलतां मनोगताम् ।
आदेशिकानां प्रवरं तमीडे ॥ ३६ ॥
इतीदं ब्रह्मरातेन सुरर्षेः कीर्तितं स्तवम् ।
अधीयानो धारयन्वा निःश्रेयसमवाप्नुयात् ॥ ३७ ॥

इति श्रीनारदस्तोत्रम् ।

वेदव्यासमहं वन्दे वेदव्यासकरं हरिम् ।
पराशरसुतं सत्यवतीपुत्रं महामुनिम् ॥ ३८ ॥
प्राचीनगर्भं प्रवदन्ति यं वै ।
ज्ञानावतारं प्रथमं मुरारेः ॥
आचार्यसिंहासनमाश्रितो यः ।

वेदान्तसूत्राण्यवदच्च मन्त्रान् ॥ ३९ ॥
अपान्तरतमा मुनिर्निगमादेशिकश्चादिमः ।
वदन्ति परमर्षयोऽपरविधिं च षष्ठं विधेः ॥
चतुर्मुखमुखोदितं निगदितं च यत्पञ्चमम् ।
जगद्धितकृते निजहितस्य वेदं नुमः ॥ ४० ॥
व्यासाम्भोधि(धौ)ज्ञानविज्ञानलीनम् ।
तस्मिन् जातं भारताम्भोजपुष्पम् ॥
हंसाहंसा मोदिता यस्य मोदात् ।
त्यक्त्वासारां संसृतिं यान्ति पारम् ॥ ४१ ॥
मानं यस्य वचः सुरासुरगणैः सद्भिर्नरैर्मन्यते ।
ज्ञानं येन च भण्यते भ्रमहरं शांतिप्रदं चामृतम् ॥
यद्वाच्यार्थचतुष्टयन्तदृषयः प्राहुर्नृणां तुष्टये ।
यस्मिन्नास्ति न चास्य तत्कचिदपि व्यासं तमेनं भजे॥४२॥
भारतस्य मिषतो निगमार्थः ।
भारते प्रकटितः परमार्थः ॥
येन संसृतिविहीनजनानाम् ।
संस्कृतिर्भवति चामृतहेतुः ॥ ४३ ॥
भक्तिविरक्त्यनुभूतिप्रधानम् ।
केशवकीर्त्यमृतैकनिधानम् ॥
येन मुदे निखिलस्य पुराणम् ।
व्यासमहं प्रणमामि पुराणम् ॥ ४४ ॥
कृष्णद्वैपायनं वन्दे व्यासं तमरणीपतिम् ।
शुको यन्मुखतो जातो यन्मुखात्परमागमम् ॥ ४५ ॥
इत्युग्रश्रवसा गीतं जनिना रोमहर्षणेः ।
पठेद्वा श्रृणुयात्स्तोत्रं स प्रसादं गुरोर्भजेत् ॥ ४६ ॥

इति श्रीव्यासस्तोत्रम् ।

देवा देवेश्वराद्याश्च ऋषयो ऋषिसत्तमाः।
पृथगेवोपदेष्टारस्तेषां पीठं पृथक् पृथक् ॥ ४७ ॥
मनुष्येश्वरावतारा ये आचार्या मुरवैरिणः।
पारम्पर्यागतं तेषां पीठमेकं विशिष्यते ॥ ४८ ॥
यथा महीभृतां पीठं जगतां पालनाय वै।
तथैवादेशिकानां च पीठं धर्मप्रवृत्तये ॥ ४९ ॥
पीठस्थ एव भूपालो यथान्यायप्रवर्तकः।
तथा पीठस्थिताचार्यो योग्यो धर्मप्रवृत्तये ॥ ५० ॥
पीठस्थितो यथा राजा मान्यो देवैर्नरैरपि।
तथा पीठस्थिताचार्यः पूज्यः स्यान्न विना च तम् ॥ ५१ ॥
यदा विलुप्यते पीठं पारम्पर्यक्रमागतम्।
देशकालप्रमादाद्यैस्तदा नूत्नं विधीयते ॥ ५२ ॥
देवर्षीणां च पूर्वेषां मन्त्रं वा नाममन्त्रकम्।
संयोज्य पीठमन्त्रेण पीठं संस्थापयेत्सुधीः ॥ ५३ ॥
राजपीठाङ्गवद्राजपीठाङ्गैः पीठमर्चयेत्।
अथवा भावनामात्रैः पूर्वोक्तं वा यथेप्सितम् ॥ ५४ ॥
अथवा सप्तदशभिर्यन्त्रैर्मन्त्रैर्निरूपितम्।
सम्राडाचार्यपीठं स्यात्समर्च्यं नित्यमेव तत् ॥ ५५ ॥
तस्य दक्षिणपार्श्वे तु कुर्याद्यन्त्रचतुष्टयम्।
तत्वतत्वेशर्षिदेवैरुपदेवैस्तदिष्यते ॥ ५६ ॥
वामे पार्श्वे चतुर्यन्त्री कुर्यात्साधकसत्तमः।
स्वरैर्वर्णैर्मन्त्रबीजैः पदैर्मानस्य संभवात् ॥ ५७ ॥
पुरतः पदके तत्र पुनर्यन्त्रचतुष्टयम्।
गायत्र्या निगमानां च तथा वै शास्त्रमन्त्रयोः ॥ ५८ ॥
मध्ये सिद्धिनिधीयन्त्रं आसनं तत्र कल्पयेत्।

गोपालयन्त्रराजं च पृष्ठे तस्याग्रतो भवेत् ॥ ५६ ॥
सङ्ख्यायन्त्रं चाङ्कयन्त्रं पृष्ठे पीठस्य पृष्ठत: ।
अधर्मचक्रं चक्रस्याधस्थं मूर्ध्नि गुरुर्विशेत् ॥ ६० ॥
गोपालोपासकानां च एतत्सिंहासनं मतम् ।
सौवर्णं राजतं ताम्रं काष्ठमाश्मं च मृन्मयम् ॥ ६१ ॥
असंभवे भावनैव मन्त्रादीनां विधीयते ।
उत्सेधः परिणाहश्च शास्त्रतो वाप्यभीप्सितः ॥ ६२ ॥
आचार्यकुलसंभूत आचार्यगुणसंश्रयः ।
स्थित्वैव तत्वमाचार्यो योग्यो व्याख्योपदेशयोः ॥ ६३ ॥
समृद्धयोऽस्य वर्द्धन्ते प्रतापोऽस्य यतो महान् ।
आचार्यता हरेर्भक्तिर्विरक्तिरपि जायते ॥ ६४ ॥
एतत्सिंहासनं दिव्यं राज्ञा शिष्यैश्च संमतैः ।
पूजितं मननीयं स्यादाचार्यः साम्प्रदायिकः ॥ ६५ ॥
व्याससिंहासनं चान्यद्दीयते ऋषिभिर्द्विजैः ।
रोमहर्षणये यद्वच्छास्त्रव्याख्याकृतेऽर्पितम् ॥ ६६ ॥
संश्रयेद् ब्राह्मणो विद्वान्सूतो नैव विलोमजः ।
मंत्रयोः प्रातिलोम्येन मखे जातस्तथोच्यते ॥ ६७ ॥
विनन्दन्निजकाण्डार्थं पाञ्चरात्रं सदागमम् ।
वदन् स्वसंहितां गर्गाज्जज्ञे संकर्षणश्च तम् ॥ ६८ ॥
आचार्यं मानयेद्धीमान्मनसा कर्मणा गिरा ।
पञ्चाक्षरी महामन्त्रयन्त्रं स्थित्वा स्वयं हरिः ॥ ६९ ॥
इत्थं पीठस्य माहात्म्यं ज्ञात्वा पीठं समाश्रितम् ।
राधिकायै ददौ पूर्वं ललितायै च सा ददौ ॥ ७० ॥
सा मह्यमददाद् देवी वागीशाय सदस्पतिः ।
संकल्पमस्य संकल्प्य चरितं च महात्मनाम् ॥ ७१ ॥
पञ्चाक्षरं चाष्टवर्णं तथैवाष्टादशाक्षरम ।

नारायणाय शेषाय स ददौ त्रिपुरारये ॥ ७२ ॥
दशार्णेन च संयुक्तान्सोऽदान्मन्त्रान्सुरर्षये ।
द्वादशार्णेन संयुक्तान्तान्व्यासाय ददावसौ ॥ ७३ ॥
नमः पीठाय महते आचार्याय नमो नमः ।
उपदेशाय मन्त्रेभ्यः शिष्येभ्यश्च नमो नमः ॥ ७४ ॥
छत्रायामृतवर्षाय वारणायातपस्य च ।
नमश्चामरयुग्माय शङ्खयुग्माय वै नमः ॥ ७५ ॥
वादित्रेभ्यो नमस्तस्य दरारिभ्यां नमो नमः ।
ज्योतिर्युग्मायान्धकारमर्दनाय नमो नमः ॥ ७६ ॥
मायूरहस्तकद्वन्द्वस्वर्णवेत्रयुगं नमः ।
रूप्यं वेत्रयुगं भव्यं हरिवक्त्रचतुष्टयम ॥ ७७ ॥
आर्यसिंहासनं वन्दे केतुध्वजविराजितम् ।
नीराजमानं यः पश्येत्प्रणमेत्स हरिं व्रजेत् ॥ ७८ ॥

इति पीठस्तोत्रम् ।

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे तुरीयांशे सांप्रदायिकस्तोत्रनिरूपणं नामैकादशोऽध्याय. ॥ ११ ॥

---

## द्वादशोऽध्यायः ।

शाण्डिल्य उवाच—

अथाभिषेकं वक्ष्यामि आचार्यस्य महात्मनः ।
नृपाभिषेकरीत्यैव एतन्मन्त्राङ्गसंभवैः ॥ १ ॥

अथवा वैष्णवेनैवासिञ्चेत्पूर्णाऽभिषेचकैः ।
विधानेन महामन्त्रैर्मूलभूतैश्च पावनैः ॥ २ ॥
गोपालाष्टादशार्णेन दशार्णेन च वा पुनः ।
पूर्वोक्तन्यासयुक्तेन संस्कुर्यात्कलशं बुधः ॥ ३ ॥
एवं पञ्चात्तरेणापि वैष्णवेन च वैष्णवैः ।
केशवाद्यैर्मातृकार्णैरन्यैः कुम्भं प्रपूजयेत् ॥ ४ ॥
अष्टवर्णेन साङ्गेन न्यासजालयुतानि च ।
पूजयेन्मध्यमं कुम्भं कुम्भानन्यांस्तदङ्गकैः ॥ ५ ॥
वासुदेवस्य मन्त्रेण द्वादशार्णेन देशिकः ।
तदङ्गैस्तस्य च न्यासैरधिकुम्भं प्रपूजयेत् ॥ ६ ॥
मुकुन्दमनुना चापि तदङ्गैर्मध्यमं घटम् ।
प्रत्यङ्गैः कलशानन्यान् पूजयेच्च यथोचितम् ॥ ७ ॥
अष्टपत्रं लिखेत्पद्मं नवकुम्भानिह न्यसेत् ।
प्राच्यामपाच्यां च प्रतीच्या मुदीच्यां तथा पुनः ॥ ८ ॥
शोभने समये देशे पुण्ये वोपेयते गृहे ।
देवालये महाराजालये वापि निजालये ॥ ९ ॥
राजा वास्य पुरोधा वाप्याचार्याश्च सुमेधसः ।
पूर्वाचारस्य ये शिष्यास्ते दायादाधिकारिणः ॥ १० ॥
आचार्यस्याभिषेके हि तत्राचार्यं परं परम् ।
आचार्यकुलसंभूतमभिषिञ्चेत्सलक्षणम् ॥ ११ ॥
मण्डपं तत्र कुर्वीत एकविंशतिहस्ततः ।
अधिकञ्च ततो न्यूनं पीतकौशेयमण्डितम् ॥ १२ ॥
गोपाले वैष्णवेऽन्यत्र श्वेतमेव मनोहरम् ।
मध्यवेद्यान्ततश्चक्रारविन्दं शोभनं लिखेत् ॥ १३ ॥
मुख्यकुम्भान्न्यसेत्तत्र ईशानार्यः प्रपूजयेत् ।
अन्यान् पूर्वादिकुण्डायां विष्णून् मध्यासनस्थितान् ॥ १४ ॥

निजेष्टदेवं तत्रैव सौवर्णं स्वर्णकुम्भके ।
यजेद्विष्णुं च वाचान्यं देवं पूर्वोक्तपञ्चके ॥ १५ ॥
वेदिकाग्रे न्यसेत्कुम्भान् प्रत्येकं नवसङ्ख्यकान् ।
चतुरस्रेषु वेद्यां वाक्षतपुञ्जे सुशोभने ॥ १६ ॥
तदग्रे पश्चिमे कुण्डं पञ्चकुण्डीविधानतः ।
पञ्चघस्रैस्त्रिघस्रैर्वा घस्रेणाप्यतिसङ्कटे ॥ १७ ॥
यागं वै सर्वदेवानां पायसाज्जसुमैश्चरेत् ।
घृतप्लुतैर्यथालब्धैर्ब्राह्मणैर्मन्त्रवित्तमैः ॥ १८ ॥
आचार्यस्तत्र चाचार्यो ब्रह्मा स्यात्सर्वतन्त्रवित् ।
सेच्यस्तु प्रतिमाभूतोऽभिषेच्यः कलशोदकैः ॥ १९ ॥
सुवर्णकलशैः स्वर्णपुष्पैः स्वर्णमनूत्तमैः ।
स्वर्णतीर्थाम्बुभिः स्वर्णपट्टे स्वर्णाभिषेचनम् ॥ २० ॥
नवभिर्नवभिः कुम्भैराचार्यैः पञ्चकुण्डगैः ।
समर्च्यो मूलदेवोऽत्र कुण्डाचार्यैः पृथक् पृथक् ॥ २१ ॥
ततोऽभिषेच्यो हि गुरुराचार्यः स्नानमण्डपे ।
चतुर्भिरादावाचार्यैः स्वस्वकुम्भाम्बुभिः क्रमात् ॥ २२ ॥
मूलकुम्भात्समुत्तार्य देवसिंहासनं न्यसेत् ।
मध्यवेद्यां ततो मध्यकुम्भ आचार्य आददे ॥ २३ ॥
ऋत्विजः कलशानन्यान् ततो न्यासांश्चरन्त्विमे ।
वैष्णवः प्रथमं न्यासः पूर्वाचार्यो विधाय वै ॥ २४ ॥
अभिषिञ्चन्निजैः कुम्भैः पुण्ड्राञ्चीराजनं चरेत् ।
चरेन्नारायणं न्यासं दक्षिणादेशिकस्ततः ॥ २५ ॥
पश्चिमादेशिकश्चैवं वासुदेवमनुं न्यसेत् ।
एवमेमोत्तराचार्यो मुकुन्दस्य मनुं न्यसेत् ॥ २६ ॥
ईशाना ादेशिकस्तु गोपालस्य मनुं न्यसेत् ।
अवशेष्यैव कलशं मध्यमं शेषकुम्भकैः ॥ २७ ॥

समाने यस्ततस्तस्मादाचार्यो नूतनाम्बरः ।
पूर्वतः स्थापिते सिंहासने मन्त्रादिसंस्कृते ॥ २८ ॥
दत्त्वैवान्तःपटं पूर्वं गोपीशस्य शुभोदये ।
दर्शनं कारयेत्तस्मै मार्जयेन्मूलकुम्भतः ॥ २९ ॥
स्वसांप्रदायिकाचार्यस्तिलकं प्रथमं चरेत् ।
ततः सर्वेऽपि तिलकमाचार्यपूजनं तथा ॥ ३० ॥
नीराजनं चोपहारं चरेयुः कुसुमाञ्जलिम् ।
राजापिताननु पुनः शिष्या विज्ञाः परे जनाः ॥ ३१ ॥
एवं चैवाभिषिक्तोऽयं श्रीगोपालस्य पूजनम् ।
कृत्वैव कृत्वा विष्णवादेः पूजनं च यथोचितम् ॥ ३२ ॥
ततः पूर्णाहुतिं वह्नेर्यजमानाभिषेचनम् ।
यज्ञस्यास्य समृद्ध्यर्थं गुरुविप्रादितोषणम् ॥ ३३ ॥
दानानि बहुशस्तत्र आर्तानामार्त्तिमोचनम् ।
राजा तस्य पदं दद्याद्यशोविद्यामहोदयम् ॥ ३४ ॥
प्रणमेयुः पुनः सर्वे आचार्यमुपढौकितैः ।
महायानेन नेतव्यस्तौर्यत्रिकपुरःसरम् ॥ ३५ ॥
सदने प्रापणीयोऽसौ भोक्तव्यं च महोत्सवे ।
रात्रौ जागरणं कुर्याद्यामे यामेऽर्चनं चरेत् ॥ ३६ ॥
अथवा नवभिः कुम्भैर्गोपीशस्य मखोत्तरम् ।
आचार्यं हेमपट्टस्थं स्नापयेयुर्द्विजोत्तमाः ॥ ३७ ॥
नूत्नपीताम्बरधरमुपवेश्य वरासने ।
समर्च्य तिलकं कृत्वा कुर्युर्नीराजनं ततः ॥ ३८ ॥
आचार्यान्पुरतः कृत्वा राजा वा तस्य सेवकाः ।
एवमाचार्यतावाप्तिर्भवेद्दिग्जयिनो गुरोः ॥ ३९ ॥
आचार्यकुलसंभूतः संस्कृते च वरासने ।
स्थितस्संपूजितः शिष्यैराचार्यः सोऽपि जायते ॥ ४० ॥

तस्योपदेशश्चादेशो महदर्थकरो नृणाम् ।
दर्शनं पूजनं तस्य भक्तिर्यज्ञाख्यमीरितम् ॥ ४१ ॥
भक्तिभाजां विरक्तानां सतां चैव महात्मनाम् ।
निर्दोषाणां निरीहाणां यस्मिन् सन्ति महागुणाः ॥ ४२ ॥
स आचार्यो हरिः साक्षाच्छिष्यस्तत्सेवनं चरेत् ।
तत्सेवया विशुद्धिः स्याद्धृदयस्य वचोऽमृतैः ॥ ४३ ॥
शिष्यो वाप्यथवाशिष्यो य इच्छेद्धितमात्मनः ।
पीठस्थं वापि भूमिस्थं संश्रयेत्तादृशं गुरुम् ॥ ४४ ॥
देवालयमथारामान्नादिसत्रजलाशयान् ।
पुरं ग्रामं धरां धाम गुरवेऽस्मै समर्पयेत् ॥ ४५ ॥
विरक्ता योगिनः शान्ता यतयो वर्णिनस्तथा ।
तपस्विनो ब्रह्मनिष्ठास्तेभ्यो देयमपेक्षितम् ॥ ४६ ॥
एवं मुख्यास्तु गुरवो ब्रह्मज्ञानोपदेशकाः ।
भक्तिज्ञानोपदेष्टारो विरक्ताश्चोर्ध्वरेतसः ॥ ४७ ॥
काषायाम्बरदण्डादिर्विष्णुलिङ्गं महात्मनाम् ।
प्रशस्य ये द्विजाग्र्याणां त एवार्च्या हरिर्यथा ॥ ४८ ॥
अन्येषां वीतरागाणां गृहत्यागो विधीयते ।
स्नानसन्ध्यासुरार्चा च कर्मैषां भजनं हरेः ॥ ४९ ॥
हरिरूपतया विश्वं प्रणमेयुः पुनः पुनः ।
गुणानेव हि चान्येषां कीर्तयन्ति मुदा हृदा ॥ ५० ॥
भजनानन्दमग्नानां बाह्याभ्यन्तरलक्षणम् ।
दृश्यते विविधावस्थम परोक्षतया हरेः ॥ ५१ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे तुरीयांशे आचार्याभिषेकनिरूपणं नाम द्वादशोऽध्यायः ॥ १२ ॥

———:o:———

## अथ त्रयदशोऽध्यायः ।

शाण्डिल्य उवाच—

भविष्यानथ वक्ष्यामि आचार्यान् लोकविश्रुतान् ।
धर्मरक्षाकृते येषामवतारा हरेर्मताः ॥ १ ॥
सिद्धं यत्सच्चिदानन्दं ब्रह्मैव रमणेच्छया ।
बभूव जगदाकार आत्मकामोऽपि लोकवत् ॥ २ ॥
अनन्तानन्तमहिमा अचिन्त्यैश्वर्यशक्तयः ।
धर्मरूपाः स्वरूपाश्च कार्यं कुर्वन्त्यलौकिकम् ॥ ३ ॥
साकल्येन तदज्ञातं वेदैर्देवैर्मुनीश्वरैः ।
तदद्भुतं महच्चित्रं वाङ्मनोऽगोचरं परम् ॥ ४ ॥
सर्वाकारमनाकारं सर्वाधारमसम्भृतम् ।
अकर्त्तारं च कर्तारं चिदानन्दैकविग्रहम् ॥ ५ ॥
सदा चैकरसं शुद्धमात्मानं चात्मनामपि ।
प्रत्यग्धाम्ना स्वयंज्योतिः श्रुत्या गम्यं न युक्तिभिः ॥ ६ ॥
सच्चिदानन्दमात्रस्य कथं चासज्जडादिकम् ।
दुःखात्मकं च घटते परिणामो जगन्मयम् ॥ ७ ॥
समसत्ताक एव स्यात्परिणामो हिमाम्बुवत् ।
विकारमन्तरा नैतन्निर्विकारे कथं च तत् ॥ ८ ॥
नैतद्युक्ततरं वाक्यं व्यासेनैव विखण्डितम् ।
मन्तव्यं श्रुतिवाक्यैस्तच्छ्रुतिवाक्यैर्निरूपितम् ॥ ९ ॥
विकृतोऽविकृतश्चैव परिणामो द्विधा मतः ।
आद्यो विनिमयस्तत्र द्वितीयश्चानवस्थितः ॥ १० ॥
गुणाधिकस्तु तत्राद्यो व्योमादीनां नलादिवत् ।

हेम्नश्च हेमखण्डस्य कटकादेः परो मतः ॥ ११ ॥
विकारः समसत्ताको भूत्यादिरेधसो यथा।
लौकिकेषु पदार्थेषु एतौ सत्येषु प्रायशः ॥ १२ ॥
विवर्त्तो तात्त्विको ज्ञेयः स्वरूपेषु भ्रमेषु च।
यथा सिन्धुतरङ्गाणां भुजङ्गादेर्गुणादिषु ॥ १३ ॥
जडादेव न भिन्नाः स्युः सच्चिदानन्दगोचराः।
नामरूपादिकं तत्र तदपि ब्रह्म शाश्वतम् ॥ १४ ॥
सृष्टिर्विचित्रा लीलार्थं कृता साचिन्त्यशक्तिना।
न तत्र दोषलेशोऽस्ति चिन्ता रत्नादिगापि (?) सा ॥ १५ ॥
सृष्ट्यादौ ब्रह्मणो जन्म विसर्गस्तत्र सर्गजः।
समयो द्विपरार्द्धोऽस्य शतवर्षात्मकश्च सः ॥ १६ ॥
नामानि तेषां प्रत्येकं कल्प्यन्ते नामभिर्विधेः।
तस्य द्वादश मासाः स्युरवतारैर्हरेः पृथक् ॥ १७ ॥
वराहो वामनो विष्णुर्मत्स्यः कच्छो हयाननः।
हंसः सुपर्णो यज्ञश्च वैकुण्ठो विश्वजिद्धरिः ॥ १८ ॥
एतैर्द्वादशभिर्मासैर्मासस्त्रिंशद्दिनात्मकः।
दिनः कल्पाभिधोऽन्यत्र ऋषिभिर्विनिरूपितः ॥ १९ ॥
महायुगं चतुर्युग्याः सहस्रद्वितयेन वै।
ताभ्यां दिवा च रात्रिश्च ब्रह्मणः परमेष्ठिनः २० ॥
प्रवर्तते दिवा सृष्टिर्या त्रिलोक्यां व्यवस्थिता।
निवर्तते निशायां सा तूष्णींभावात्स्वयम्भुवः ॥ २१ ॥
वर्षकल्पेषु चासत्याल्लोककल्पो निवर्तते।
प्रविश्य नाभौ यद्विष्णोर्ब्रह्मा शेते निजैः सह ॥ २२ ॥
चतुर्विंशतिरह्नां वै तल्लीलायां विलीयते।
ततस्सत्यं समभ्येत्य वेधाः सृजति पूर्ववत् ॥ २३ ॥
महकल्पाख्यश्चात्र ब्रह्मणोऽर्द्धायुषो मताः।

वर्षैश्च सप्तदशभिर्ब्राह्मपाद्मवराहकाः ॥ २४ ॥
यदादौ ब्राह्मकल्पः स्यात्सृष्टेरादौ तदा जगत् ।
शब्दसृष्ट्या भवेदत्र तत्सर्वं स्यादलौकिकम् ॥ २५ ॥
पाद्मकल्पो यदा चादौ सृष्टिः पद्मात्मिका तदा ।
वाराहकल्पे वाराहसृष्टिं चानयति स्वयम् ॥ २६ ॥
हायनाश्चैकपञ्चाशद्व्यतीताः परमेष्ठिनः ।
द्वितीयहायनस्यादौ श्वेतः कल्पः प्रवर्तते ॥ २७ ॥
सात्विका राजसाश्चैव तामसाश्च प्रकीर्णकाः ।
न ते संकलिता नैव क्रमशः स्युः प्रकीर्णकाः ॥ २८ ॥
प्रकीर्णः प्रथमः क्वापि सगुणत्रितयात्मकः ।
पितॄणां चैव भारत्या पुष्टिस्तत्र दिवौकसाम् ॥ २९ ॥
ततश्च सात्विकः कल्पो राजसस्तामसोऽपि वा ।
गुणभेदात्सृष्टिभेदः स्वभावेन यदृच्छया ॥ ३० ॥
तत्र सात्विककल्पेषु विष्टरश्रवसः श्रवः ।
यत्रैव योगसंसिद्धा भक्तास्तस्यामृतञ्जुषः ॥ ३१ ॥
राजसेषु च कल्पेषु माहात्म्यं ब्राह्मणोऽधिकम् ।
प्रायशः कर्मसंसिद्धिर्योगसिद्धिः कचित् कचित् ॥ ३२ ॥
तामसेषु च कल्पेषु महेशमहिमाधिकः ।
अग्नेश्च क्षुद्रदेवानां प्रायशः स्वगतिर्नृणाम् ॥ ३३ ॥
चत्वारस्सात्विकाः कल्पा राजसास्तामसास्तथा ।
पुनरेवं च संकीर्णा आद्यन्ताभ्यां च षण्मताः ॥ ३४ ॥
प्रत्येकमपि कल्पेषु गुणानां परिवर्तनम् ।
मनूनामवताराणां मुनीनां भेदतो भवेत् ॥ ३५ ॥
मनुर्मनुसुता भूपा देवा देवेश्वरास्तथा ।
ऋषयोंऽशावताराश्च ते स्युर्मन्वन्तरे पृथक् ॥ ३६ ॥
आदिसृष्टौ कृतयुगे जना लक्षसमायुषः ।

एकत्रिंशतिहस्ताश्च स्वदैर्घ्येण महौजसः ॥ ३७ ॥
सुवर्णवाससः कान्ता रत्नाभरणभूषिताः ।
अस्थिप्राणाः स्वर्णपात्रा गव्यशुष्कफलाशिनः ॥ ३८ ॥
एकपुत्रैककन्याश्च प्रायशो नियतायुषः ।
विष्णोर्भक्ता ज्ञाननिष्ठा विप्राः कर्मादिनाऽधिकाः ॥ ३९ ॥
अपरेषु कृतेष्वत्र चतुःशतसमायुषः ।
दैर्घ्येण सप्तहस्ताः फलगव्यान्नभोजनाः ॥ ४० ॥
अस्थिप्राणा महाप्राणाः क्षौमवल्कलवाससः ।
तत्रास मानवो धर्मः शान्ता दान्तास्तपस्विनः ॥ ४१ ॥
स्वर्णपर्णादिपात्राश्च सर्वे यज्ञसमाश्रिताः ।
धर्मश्चतुष्पात्तत्रासीत्स्वल्पापत्याः सुवर्चसः ॥ ४२ ॥
सर्वाः पतिव्रता नार्यस्सुन्दर्यः सुभगाश्शुभाः ।
गुरुभक्ताः पितृभक्ता विप्राश्च यतयोऽधिकाः ॥ ४३ ॥
एवं त्रेतायुगे पूर्वे चतुर्दशकरा नराः ।
वर्षायुतायुषः सर्वे त्रयीधर्मपरायणाः ॥ ४४ ॥
कौशेयवाससो दान्ता हेमभूषणभूषिताः ।
मांसप्राणा रूप्यपात्राः फलगव्यान्नभोजिनः ॥ ४५ ॥
चतुःपुत्राः पवित्राश्च यज्ञेश्वरसमाश्रिताः ।
प्रायशो भिक्षवो विप्राः शोणवर्णास्सुवर्चसः ॥ ४६ ॥
अपरेषु युगेष्वत्र तृतीये त्रिशतायुषः ।
नवहस्तमिता दैर्घ्याद् गौतमं धर्ममाश्रिताः ॥ ४७ ॥
मांसप्राणा महाप्राणाः सुरूपाश्शाणवाससः ।
वनेचराः क्षत्रियाश्च विप्राश्च योगिनोऽधिकाः ॥ ४८ ॥
प्रथमे द्वापरे चाथ दैर्घ्ये सप्तकरा नराः ।
तेषां सहस्राब्दमायुर्वासुदेवपराश्च ते ॥ ४९ ॥
आश्रिताः शङ्खलिखितप्रोक्तं धर्मं सनातनम् ।

दानधर्मरतास्सर्वे द्विपाद्धर्मः प्रवर्तते ॥ ५० ॥
महार्हवस्त्राः पीताभाः ताम्रपात्रा महर्द्धयः ।
कृतान्नभोजिनस्सर्वे पवित्रा बहिरन्तरम् ॥ ५१ ॥
बह्वपत्या महासत्वा असृक्प्राणास्सुपेशलाः ।
अधिका गृहिणो वैश्यास्तथागमश्रुतिप्रियाः ॥ ५२ ॥
अन्येष्वेषु युगेष्वत्र पञ्चहस्तमिता नराः ।
द्विशताब्दायुषः सर्वे सर्वधर्मपरायणाः ॥ ५३ ॥
भक्ता हरेर्हरस्यापि तूलरोमादिवाससः ।
तथा पित्तलपात्राश्च स्वर्णपात्रा गृहाश्रमाः ॥ ५४ ॥
स्वर्णरूपविभूषाश्च वीर्यवन्तो यशस्विनः ।
मानार्थिनो मानदाश्च अनुलोमाङ्गनोद्वहाः ॥ ५५ ॥
तिष्ये च प्रथमे सृष्टेर्जनाः सर्वे शतायुषः ।
दैर्घ्येण पञ्चहस्ताश्च चतुर्हस्ताङ्गना नराः ॥ ५६ ॥
अन्नाभावान्मांसभुजो वस्त्राभावाच्छदांशुकाः ।
पात्राभावात्पर्णपात्रा मृत्पात्राश्च विशेषतः ॥ ५७ ॥
सर्वत्रगामिनो दुष्टा उद्वाहादिक्रियोज्झिताः ।
स्वल्पसंस्कारधर्माश्च आगमैकपरायणाः ॥ ५८ ॥
सर्वदोषाकराश्चैव गुणैः सर्वैर्विवर्जिताः ।
एवंभूतकलावाद्ये नार्यः सर्वा हतव्रताः ॥ ५९ ॥
अपरेषु च तिष्येषु नराः स्वल्पायुषो मताः ।
स्वल्पकायाः स्वल्पधना मन्दभाग्याश्च रोगिणः । ६० ॥
निगमागमधर्मेषु येषां नैव दृढा मतिः ।
परपाकभुजः सर्वे पशुमांसभुजः खलाः ॥ ६१ ॥
मद्यमांसाङ्गनाद्यूतपराः स्थलपरास्तथा ।
वर्णाश्रमाऽभिमानाश्च तत्तत्कर्मविवर्जिताः ॥ ६२ ॥
धनिनो निर्धनाः पूर्वैः संकीर्णा युगधर्मतः ।

शिश्नोपस्थपराः सर्वे कदपत्याः कदङ्गनाः ॥ ६३ ॥
एवं सामान्यतः प्रोक्तं युगानां रूपमीदृशम् ।
आदिकल्पे च सत्याद्याः प्रभवन्ति क्रमं विना ॥ ६४ ॥
कदाचित्तिष्य एवादौ एवं सत्यादयोऽप्यमी ।
ततः क्रमेण वर्तन्ते सत्यत्रेतादयो युगाः ॥ ६५ ॥
अयं कलिः संप्रवृत्तो मघासु च महर्षिषु ।
तदा परीक्षितो राजा धर्मरक्षाकृतेऽजनि ॥ ६६ ॥
कृष्णयोर्जननादूर्ध्वं पञ्चत्रिंशच्छरद्यभूत् ।
भारतं नाम तद्युद्धमौत्तरेयस्ततोऽभवत् ॥ ६७ ॥
इतः परं च षट्त्रिंशत्समासु च गतास्वपि ।
अभूद्यादवसंहारो हरिर्यातस्ततो दिवम् ॥ ६८ ॥
ज्ञानं दत्त्वोद्धवायैव ज्ञानं दातुं निजात्मनाम् ।
याचितः पादुके तस्मै ददौ पूजयितुं हरिः ॥ ६९ ॥
संपूज्य शिरसा चक्रे स्थित्वाऽसौ विरहातुरः ।
कलापं यातुमाज्ञप्तोऽनुगृह्य विदुरादिकान् ॥ ७० ॥
ततः कलिः संप्रवृत्तस्त्रयोदश्यां भृगोर्दिने ।
धर्मं संपीडयामास निगृहीतः परीक्षिता ॥ ७१ ॥
कृता च वर्षमर्यादा दत्त्वा स्थानानि पञ्च वै ।
गां च धर्मवृषं राजा सुखिनौ चाकरोदिह ॥ ७२ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे तुरीयांशे पूर्वयुग-व्यवस्थावर्णनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

## चतुर्दशोऽध्यायः ।

शाण्डिल्य उवाच—

अभिमन्युसुतो राजा राजर्षिरमितद्युतिः ।
कलिं विजित्य जगृहे वर्षाणामयुतं बलिम् ॥ १ ॥
कलौ दशसहस्राणि वर्षाणि भगवान् हरिः ।
नाम्ना धाम्ना महेशेन किञ्चिद्धर्मेण स्थास्यति ॥ २ ॥
सहस्रं पञ्चकं पूर्वं जह्नुजा सुप्रभावतः ।
भविष्यत्यर्चिता लोकैः सामान्येव ततः परम् ॥ ३ ॥
रजकाश्चर्मकाराश्च नीचाः श्रेष्ठा द्विजादयः ।
सर्वेषामस्थिपातोऽत्र यात्रात्र महिमात्रिका ॥ ४ ॥
बदर्यादिमहातीर्थे दुरापे चापि दुर्गमे ।
नटा विटा द्विजाश्चापि यास्यन्ति महिमात्र कः ॥ ५ ॥
ग्रामदेवोपदेवाश्च स्थास्यन्ति निजमूर्त्तिषु ।
दास्यन्ति प्रत्ययं लोके द्विसहस्रं तदर्द्धकम् ॥ ६ ॥
भूताः प्रेतास्ततश्चोर्ध्वं प्रवेक्ष्यन्ति च तत्तनूम् ।
शास्त्रोक्तासु तथान्यासु देवा अपि क्वचित्क्वचित् ॥ ७ ॥
देवानां दर्शनं साक्षान्मुनीनां योगिनामपि ।
औषधीनाञ्च मन्त्राणां मणीनां महिमोदितः ॥ ८ ॥
ततः पूर्वं कलियुगे भविष्यति क्वचित्क्वचित् ।
महात्मनाञ्च निकटे सिद्धिरूर्ध्वमपि क्वचित् ॥ ९ ॥
कृष्णे गते भगवति वैकुण्ठमसुराः सुराः ।
वेदमार्गमिषेणैव भविष्यन्ति च हिंसकाः ॥ १० ॥
यास्यन्ति सर्वं दास्यन्ति दुःखं देवकुलस्य च ।

अवतारं तदा विष्णुः सुरान् त्रातुं करिष्यति ॥ ११ ॥
नाम्ना बुद्धो जिनसुतो भूत्वा देवर्षिभिः सह ।
महाबुद्धिर्महातेजा महामहिमसद्गतिः ॥ १२ ॥
हिंसाप्रायं वेदधर्मं मखानपि सुनिर्दयान् ।
मुष्टिघातैर्मुखं रुद्ध्वा हन्यन्ते यत्र बर्कराः ॥ १३ ॥
तादृक्स्वरूपं यज्ञानां प्रदर्श्यैवासुरान्सुरान् ।
प्रच्यावयिष्यति ततो निजधर्मं प्रवर्त्तयन् ॥ १४ ॥
न यत्र जातिभेदोऽस्ति शुद्धिर्नात्र मृदम्बुजा ।
दया नैवात्मनो यत्र इष्टापूर्त्तं मनाङ् न हि ॥ १५ ॥
निजबुद्धिकृतैः शास्त्रैर्दुर्जेयैस्तर्कविभ्रमैः ।
वाचालैः शिष्यवर्गैश्च बौद्धा जेष्यन्ति वैदिकान् ॥ १६ ॥
विलुप्ते वैदिके धर्मे बौद्धैर्देवर्षयः पुनः ।
प्रार्थयिष्यन्ति विष्णुं तं ततः सोऽवतरिष्यति ॥ १७ ॥
विप्रर्षिवंशे कावेर्यास्तटे विष्णोश्च सन्निधौ ।
विष्णुस्वामीति विख्यातो बाल एव महामतिः ॥ १८ ॥
व्रती हरेः समो ज्ञाता कृत्वा व्यासं गुरुं मुनिम् ।
तत्वं तत्वागमं चैव प्राप्स्यति प्राङ् मनूत्तमम् ॥ १६ ॥
सच्चिदानन्दमात्रैको लीलां कर्त्तुं निजेच्छया ।
जातोऽसौ जगदाकारः निर्विकारः स्वशक्तितः ॥ २० ॥
जडा जीवाश्च जगति तद्रूपाः सागराम्बुवत् ।
विलक्षणाद् विनिमयात्परिणामाः सलक्षणाः ॥ २१ ॥
उत्पन्नास्त्रिविधा जीवा देवदानवमानवाः ।
वैदिकोऽवैदिको मिश्रो धर्मस्तेषां कृतेऽभवत् ॥ २२ ॥
तत्र वैदिकधर्मस्य रक्षार्थं गुरवो मताः ।
तिष्येऽत्र प्रथमाचार्यो विष्णुस्वामी भविष्यति ॥ २३ ॥
स वैदिकं पुरा धर्मं स्थापयित्वा ततः परम् ।

भक्तिधर्मञ्च देवानामधिकारभिदा पुनः ॥ २४ ॥
स्वयञ्चैव हरेर्भक्तिं कुर्वन् शिष्यजनानपि ।
कारयिष्यन्महातेजा लोके तां चारयिष्यति ॥ २५ ॥
वारयिष्यति बौद्धानामुपधर्मं प्रवर्त्तितम् ।
करिष्यत्यद्भुतां वृत्तिं सम्प्रदायं हरेरपि ॥ २६ ॥
जन्मेजयस्य यज्ञान्ते समेतैर्मुनिभिस्तदा ।
कर्त्तव्यश्च कलौ धर्मो ह्यातव्योऽन्यो निरूपितः ॥ २७ ॥
श्रौतः स्मार्त्तःस्वसूत्रोक्तो विधेयः शक्तितो यथा ।
संस्कारश्चाह्निको वापि यथाशक्ति परोऽपि वा ॥ २८ ॥
केशवस्य शिवस्यापि यस्य कस्य दिवौकसः ।
एकं भजनं धर्मं वै स्वीयं कार्य्यं हितेच्छुभिः ॥ २९ ॥
पञ्च यज्ञाः सकृन्नित्या मखाश्चाहिंसकाः परे ।
कोटिसत्रादयः कार्या भक्तिज्ञानविरक्तयः ॥ ३० ॥
अथ वर्ज्यं पापमिश्रं यावत्कर्म च वैदिकम् ।
अनित्यं नित्यमपि च मुनिभिः परिकीर्त्तितम् ॥ ३१ ॥
गवाश्वनरमेधाश्च आत्ममेधस्तथैव च ।
भृग्वग्निहिमपातश्च तथा प्रायोपवेशनम् ॥ ३२ ॥
सहानुगमनञ्चैव असवर्णासतिस्त्रियोः ।
बालापत्या दुःखिता तद्वस्त्राद्यनुगमक्रिया ॥ ३३ ॥
ऊढायाः पुनरुद्वाहो ऊर्ध्वं सप्तपदीविधेः ।
अन्त्यजादेरम्बुपानं रेते प्राप्ते च संग्रहः ॥ ३४ ॥
असवर्णासमुद्वाहो विधवाया नियोजनम् ।
समुद्रयात्रास्वीकारो विषमांशविभाजनम् ॥ ३५ ॥
कामार्त्ताया निरोधश्च जारयोश्च निषूदनम् ।
निषूदनञ्च चोरस्य अतिदुष्टस्य मोचनम् ॥ ३६ ॥
कारागारगृहीतानां साङ्कर्यं चातिपीडनम् ।

तेषाञ्च सङ्ग्रहः प्रोक्तो महापातकनिष्कृतिः ॥ ३७ ॥
शरणागतबालस्त्रीहिंसकानां परिग्रहः।
घटस्फोटं विना पापसङ्क्रमस्तस्य सङ्गहः (?)॥ ३८ ॥
योगक्षेमप्रचाराणां पीठस्य च विभाजनम्।
राज्यस्य चैव दाराणामधिकारपदस्य च ॥ ३९ ॥
देवपित्रग्निकार्याणि राजदेवविभूतयः।
सिंहासनं गुरोरेव देयं वा गुणिनः क्वचित् ॥ ४० ॥
परशय्यासनं वस्त्रं पादुकोपानहौ तथा।
नादेयानि न देयानि स्वात्मनः कम्बलं विना ॥ ४१ ॥
सगोत्रायाः समुद्वाहे दत्त्वा गोत्रान्तरे च ताम्।
कृत्वा शुद्धिञ्चोपयमं धर्मे कामे न तां त्यजेत् ॥ ४२ ॥
दिवौकसां मद्यभुजां पलादीनां निवेदितम्।
आविध्य मन्त्रैर्विप्रैश्च पूजितानां न संस्पृशेत् ॥ ४३ ॥
नैवेद्यं च हरेर्ग्राह्यं न चान्येषां दिवौकसाम्।
देवालये न तद्ग्राह्यं प्रमादेन हि दुष्यति ॥ ४४ ॥
स्वयं व्यक्ते निजाचार्यस्थापिते साम्प्रदायिके।
भोज्यं दिवौकसां स्वेषां परेषां मानमाचरेत् ॥ ४५ ॥
शूद्रोऽपि भगवद्भक्तः पापकर्मबहिष्कृतः।
दीक्षितो विप्रसेवी च स च मान्यो द्विजो यथा ॥ ४६ ॥
वैदिका विधिवद्वन्द्या अन्ये ते हरिनामभिः।
अवन्द्याः पापिनो मूढाः कनिष्ठाः कर्मतत्पराः ॥ ४६ ॥
कलौ गङ्गा धनुस्तीर्थं महातीर्थानि दूरतः।
पापघ्नानि व्रतान्येव मूढानां दुर्बलात्मनाम् ॥ ४८ ॥
सदाचारप्रधानोऽत्र लौकिकाचार एव च।
सन्तो महान्तो लोकाश्च देशग्रामकुलस्थिताः ॥ ४९ ॥
त्यक्त्वैव साधनं सर्वं षट्शुद्ध्या च विवर्जितैः।

निर्धनैर्निर्विद्यै रुग्णैर्भजनीयो हरिः सदा ॥५०॥
त्यजन्ति कर्म ये शक्त्या ज्ञानवैराग्यदर्पतः ।
कष्टं न सिद्धिं ते यान्ति वहवः प्रच्यवन्ति हि ॥ ५१ ॥
देशे देशगतः कार्यः स्त्रानां वै साप्तपूरुषः ।
सदाचारः प्रमाणोऽत्र परपाकादिवर्जने ॥ ५२ ॥
कचसन्दर्शनं स्त्रीणां चतुःकच्छाद्यवस्थितिः ।
दैवपैत्र्यादृतं योग्य वहेच्चाच्छादनं शिचिम ॥ ५३ ॥
यज्ञे तीर्थे तथा शौच आश्रमान्तरधारिणे ।
प्रायश्चित्तेषु चोक्तेषु वपनं ऋषिसम्मतम् ॥ ५४ ॥
वपनं केशजातानां कक्षोपस्थविवर्जितम् ।
शिखयापि विना क्वचिन्मुण्डनं च शिखां विना ॥ ५५ ॥
वदने संस्थिता केशाः स्मश्रवोऽन्ये कवास्त्वमी ।
उत्तरोष्ठगताः केशा न च्छेद्याः कारणं विना ॥ ५६ ॥
पञ्चकच्छो भवेद्विप्रश्चतुःकच्छश्च बाहुजः ।
वैश्यस्त्रिकच्छो विज्ञेयः शूद्रोऽकच्छोऽङ्गना मता ॥ ५७ ॥
पुण्ड्रैर्द्वादशभिर्विप्रो नवपुण्ड्रैश्च बाहुजः ।
षड्भिःपुण्ड्रैर्भवेद्वैश्यो बिन्दुवैकोऽङ्घ्रिजस्त्रियोः ॥ ५८ ॥
गायत्रीमात्रग्रहणाद्द्विजोऽर्च्यः स्याद् गुणाधिकैः ।
दानवाक्येन नारी स्यान्न्यस्तः स्यात्प्रेषमात्रतः ॥ ५९ ॥
कुटीचको भवेदादौ ततो भूयाद्द्बहूदकः ।
ततो हंसो भवेदेषां शिखासूत्रादिधारणाम् ॥ ६० ॥
त्यक्त्वा त्रिदण्डसूत्रादिर्देहाध्यासे निवर्त्तते ।
न भवेत्परहंसोऽयं हरिभक्तस्तु लौकिकैः ॥ ६१ ॥
ब्राह्मणस्यैव संन्यासः शिखासूत्रादिवर्जितः ।
काषायादिधृतिश्चार्या नान्यवर्णस्य कस्यचित् ॥ ६२ ॥
ब्राह्मणस्यैव संन्यासे गायत्रीग्रहणे तथा ।

भिक्षाटने वेदपाठेऽधिकारो नेतरस्य च ॥ ६३ ॥
पारम्पर्याद्व्रतं येषां द्विजानां सम्प्रवर्त्तते।
तेषान्तु वैदिका देया मनवो नेतरस्य च ॥ ६४ ॥
ब्रह्मचर्या चतुर्वर्षादब्दतः परतो न हि।
पञ्चाशदब्दतः पूर्वं कलौ न्यासो न शस्यते ॥ ६५ ॥
बालायाश्चाक्षतायाश्च चतुर्विंशादब्दतः पुरा।
सहानुगमनं शस्तं न च वैधव्यपालनम् ॥ ६६ ॥
एवं वर्ज्यमवर्ज्यं च समेतैर्ऋषिभिः कृतम्।
प्रचारयिष्यन्ति ततो निजशिष्यैः प्रशिष्यकैः ॥ ६७ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे तुरीयांशे कलिवर्ज्यावर्ज्यधर्मनिरूपणं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

## अथ पञ्चदशोऽध्यायः।

शाण्डिल्य उवाच—

इमं धर्मं प्रवर्त्यैव बौद्धधर्मं निवर्त्य च।
शिष्येभ्यो भक्तिमार्गं दत्वा गन्ता हरेः पदम् ॥ १ ॥
इक्ष्वाकुवंशे सञ्जातः शाक्यः शुद्धोदनस्ततः।
मायां देव्यां ततो जातः शाक्यसिंहो महीपतिः ॥ २ ॥
स बाल एव भिक्षूणां बौद्धानामुपदेशतः।
भिक्षुधर्मे प्रवृत्तो हि महाबुद्धः प्रकीर्तितः ॥ ३ ॥
सावास्त्यां विचरन् क्वापि भिक्षुलक्षैरुपासितः।

महाप्रभावो सिद्धात्मा देवैर्भावितोऽर्चितः ॥ ४ ॥
यस्य प्रभावात्तन्मार्गं भविष्यन्ति प्रजा नृपाः ।
अस्तं यास्यन्ति वेदा वै प्रभाते तारका इव ॥ ५ ॥
निजधर्मः प्रचलितो महामन्त्रप्रचारितः ।
चतुर्दशातिशायी यो दीर्घायुर्दीर्घदर्शनः ॥ ६ ॥
वीतरागस्तादृगन्यो नेदृक्कोऽपि जितेन्द्रियः ।
प्रवर्त्तयिष्यति निजं धर्मं कष्टतपोमयम् ॥ ७ ॥
तस्य शिष्यैः प्रशिष्यैश्च वेदधर्मो निराकृतः ।
विरलो भविता क्वापि सिंहत्रस्तो यथा मृगः ॥ ८ ॥
अशोकश्च महीपालस्तथागतमतानुगः ।
भविता तत्प्रभावेण स च द्वीपान्तरेश्वरः ॥ ९ ॥
तस्यानुशासनात्सर्वा भविता तन्मते प्रजा ।
एवं जिननृपाणाञ्च जिनानां महिमा कलौ ॥ १० ॥
एतेषां भयतो विप्रादयो देवानुपाश्रिताः ।
वने वसन्तो सुचिराज्जाताः पाषण्डिनो जनाः ॥ ११ ॥
कलौ प्रवृत्ते तन्मार्गे वेदाध्वा भविता क्वचित् ।
व्यासशिष्यः शुकस्वामी गौड आद्यः प्रतापवान् ॥ १२ ॥
सर्वदर्शनविज्ञाता व्यासदर्शनतत्परः ।
इध्मबाहुश्च तच्छिष्यो महायोगी महातपाः ॥ १३ ॥
तस्य शिष्यप्रशिष्याणां पारम्पर्ये भविष्यति ।
सत्यव्रतो व्रतैः पूर्णस्ततो देवव्रतो मुनिः ॥ १४ ॥
गोविन्दश्च ततो व्याडिर्वासुदेवो महीधरः ।
शितिकण्ठश्च विख्यातो भगवान्नीललोहितः ॥ १५ ॥
भागलिश्चाहिराजश्च सर्वयोगी भविष्यति ।
नकुलीशो महायोगी सिद्धो बुद्धो महातपाः ॥ १६ ॥
भवितारश्च तच्छिष्याश्चत्वारो देवदर्शनाः ।

कुणिर्गर्गो मित्रकश्च रुरुरित्येव ते मताः ॥ १७ ॥
एतैश्चतुर्भिराचार्यैः स्वातन्त्र्येण निजागमाः।
प्रवर्त्तिता भविष्यन्ति योगिभिर्योगमार्गतः ॥ १८ ॥
पातञ्जलेन साङ्ख्येन तथा माहेश्वरेण च।
सिद्धान्तेन (च) संमिश्रं कृतं वेदान्तदर्शनम् ॥ १९ ॥
रुरुशिष्यान्वये भाव्या आचार्याः शतशस्ततः।
तै रक्षितो वेदमार्गो कलौ भविष्यति क्वचित् ॥ २० ॥
गौडपादो महायोगी सर्वदर्शनपारगः।
गोविन्दो योगिराजश्च वक्तासौ व्यासदर्शनम् ॥ २१ ॥
विष्णोः शिष्या महाभागा प्रथमो देवदर्शनः।
श्रीकण्ठश्च सहस्रार्चिः शतधृतिरनन्तधीः ॥ २२ ॥
कुमारपात्पराभूतिप्रमुखा हरिवल्लभाः।
वेदान्तदर्शनाभिज्ञाश्चारयिष्यन्ति तन्मतम् ॥ २३ ॥
देवदर्शनशिष्याणां प्रशिष्याणां महात्मनाम्।
शिष्यान्वयेऽथ भविता राजस्वामी महातपाः ॥ २४ ॥
निर्जित्य सुगतान्सर्वान् नृपैर्निष्कासयिष्यति।
छलेनागत्य ते दुष्टाः प्रवेक्ष्यन्ति पुनर्धराम् ॥ २५ ॥
अवतीर्य कुमारोऽथ देवैरन्यैर्मुनीश्वराः।
स्थापयिष्यति सन्मार्गं बौद्धादीन्वारयिष्यति ॥ २६ ॥
त्रिसहस्रैः (स्रेषु) षट्शताब्दाधिकेषु गतेषु च।
पराभवः समारब्धः शाक्यानां भविता ततः ॥ २७ ॥
शङ्करो वासुदेवांशसम्मतः शङ्करः स्वयम्।
हरिभक्तिं विरक्तिञ्च पाषण्डानाञ्च संविदम् ॥ २८ ॥
निर्गुणब्रह्मवादञ्च मिथ्यावादं विनात्मनः।
स्थापयिष्यति बौद्धानां जेतुं पाषण्डिनामपि ॥ २९ ॥
तेन विद्राविता बौद्धा विद्यया च बलेन च।

पाषण्डिनो परेऽप्येवं भविष्यन्ति दिगन्तरे ॥ ३० ॥
स्थापिते वैदिके मार्गे वैदिकानितरानपि ।
करिष्यत्यागमे सक्ताञ्छम्भोर्भक्तान्विशेषतः ॥ ३१ ॥
तेनापि हरिभक्तानां दुःखं भूरि भविष्यति ।
तद्वारणाय भविता भूम्यां विष्णुर्महामुनिः ॥ ३२ ॥
स विजित्यागमे सक्तान्भक्तान्पञ्चार्चने रतान् ।
विशुद्धां वैष्णवीं भक्तिं चारयिष्यति भूतले ॥ ३३ ॥
बौद्धान्विजित्य शान्तात्मा गन्तागस्त्यश्च तद्रुजा ।
स्वशिष्येभ्यो निजाम्नायं दत्त्वा निजपदं तथा । ३४ ॥
रमायाः सनकादीनां विधेरपि पुरद्विषः ।
सम्प्रदायाश्च गुरवः पूर्वमेव निरूपिताः ॥ ३५ ॥
अवशिष्टा इह प्रोक्ताः समयक्रमदर्शने ।
श्रौतस्मार्त्तादिधर्माणां विशुद्धागमवर्त्मनाम् ॥ ३६ ॥
देवांशा मुनिरूपाश्च भविष्यन्ति सहस्रशः ।
रक्षितैस्तैस्तथाप्येष कलिना भविता हतः ॥ ३७ ॥
आचार्या धर्मवक्तारोऽन्तर(रश्चान्तो)धर्मेण वर्जिताः ।
दाम्भिकाश्च जनाश्चान्ये कथं धर्मः कथं गतिः ॥ ३८ ॥
बाह्यवेषा वञ्चकाश्च भविष्यन्ति यदा भुवि ।
पाषण्डिनो महाचार्याः कर्त्तारः कलिवर्द्धनम् ॥ ३९ ॥
एकं धर्मं प्रदर्श्यैव सर्वधर्मविनाशकाः ।
दाम्भिका निन्दका लुब्धा धूर्त्ता जेष्यन्ति वैदिकान् ॥ ४० ॥
जाह्नव्यान्तस्य सविधे पूर्वञ्च शतवत्सरात् ।
स्वेच्छाचारा भविष्यन्ति आचार्या मोहितुं जगत् । ४१ ॥
हरिर्गङ्गा हरिर्गङ्गा हरेर्भक्तिर्हरेर्जनाः ।
विना कलौ गतिर्नास्ति निजाचार्याश्रमं विना ॥ ४२ ॥
कलौ भागवती सृष्टिर्भविष्यति परा क्वचित् ।

तदा श्रीवल्लभाचार्यः सम्प्रदायप्रवर्त्तकः ॥ ४३ ॥
तद्भक्ताः शतशस्तत्र भविष्यन्ति तदन्वये।
येषां चरितं विमलं तिष्यं दूरीकरिष्यति ॥ ४४ ॥
यत्राद्भुतं भक्तिरसं स्वयं नित्यं करिष्यति।
दक्षिणे गुर्जरे गौडे व्रजे दिव्यस्थलेषु च ॥ ४५ ॥
तेषां समाश्रयाद्भक्ता यास्यन्ति परमां गतिम्।
पामरा अपि किञ्चिज्ज्ञा ये च धर्मान्तरे स्थिताः ॥ ४६ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे तुरीयांशे भविष्यदाचार्यनिरूपणं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

## षोडशोऽध्यायः।

शाण्डिल्य उवाच—

इति वः कथिता विप्रा गुरुभक्तिः समासतः।
धर्मार्थकाममोक्षाश्च सिद्ध्यन्ति मनवो यया ॥ १ ॥
हरेर्भक्तिः पुरैवोक्ता द्विविधा विविधा अपि।
यत्राधिकारः सर्वेषां विशेषाद्‌ गुरुसेविनाम् ॥ २ ॥
यस्य संसेवने चान्यत्कर्त्तव्यं नैव दृश्यते।
तथापि व्यवहारार्थं स्वधर्मश्चानुयोज्यते ॥ ३ ॥
शुद्धकायेन भोक्तव्यं यथामृतमहौषधम्।
न तस्य तदपेक्षास्ति अस्ति व्यवहृतिस्तथा ॥ ४ ॥

हरेरनुगृहीता ये संशयाच्छिन्नमानसाः ।
तेषां व्यवहृतेर्भीतिर्न मनागघरिसेवने (विनाम) ॥ ५ ॥
चतुर्वर्गसमृद्ध्यर्थं ब्रह्मादैर्वैभवस्य च ।
प्राप्तुं न चलते चेतो लवार्द्धं हरिपद्युगात् ॥ ६ ॥
ते वैष्णवा महात्मान उत्तमाधमजातयः ।
देवानां पूजनीयास्ते मुनीनां न नृणां किमु ॥ ७ ॥
तिलकादिर्वहिर्लिङ्गैः सा संज्ञा प्राकृतात्मनाम् ।
अप्राकृतानां हृच्छुद्धया संज्ञा सा वीतरागिणाम् ॥ ८ ॥
वने गृहे स्थितः क्वापि प्रेमप्रसरविह्वलः ।
नेमं जानाति न परं हरिं पश्यति सर्वतः ॥ ९ ॥
यदृच्छयानुग्रहेण हरेरपि गुरोरपि ।
लभ्यते तादृशीं भक्तिं नान्यसाधनसञ्चयैः ॥ १० ॥
निजात्मनि तथा प्रेम परात्मनि तथा न हि ।
ज्ञायते चात्मनश्चात्मा हरौ प्रेम तदा भवेत् ॥ ११ ॥
शुद्धेऽद्वैते महावाक्यैः प्रोच्यते आत्मतां हरेः ।
ततो भेदं विमुच्यैव स्वात्मप्रेमा भवेदयम् ॥ १२ ॥
ज्ञानिनो हरिभक्तस्य गतिरेषा प्रदर्शिता ।
अज्ञानिनो निजात्मैव भाति सन्मात्र एव सः ॥ १३ ॥
चिदानन्दात्मनाभासो भवेन्मोहापनुत्तये ।
निरालम्बे महामार्गे निरालम्बः कथं तरेत् ॥ १४ ॥
तरेद्वा न तरेद्वापि ततश्चालम्बनं वरम् ।
आलम्बनं हरेः पादौ गुरोः पादौ प्रकीर्त्तितौ ॥ १५ ॥
धर्मार्थकाममोक्षाश्च भक्तियोगश्च कीर्त्तिताः ।
महर्षयः संहितेयं नारदर्षेर्मुखाच्च्युता ॥ १६ ॥
इतः परं किं श्रोतव्यं पुनः कथयत द्विजाः ।
इत्युक्ता मुनिना तेन तेऽब्रुवन्बद्धपाणयः ॥ १७ ॥

ऋषय ऊचुः—

धन्येन हरिभक्तेन वेदवेदान्तवेदिना।
दयालुना दयां कृत्वा उद्धृता भवसागरात् ॥ १८ ॥
दर्शितस्तमसः पारः सारभूतः परो हरिः।
किञ्चिज्ज्ञेयमितश्चान्यत्पेयं पीतेऽमृते किमु ॥ १६ ॥
अभयं सर्वदानानामुत्तमं परिकीर्त्तितम्।
तद्दत्तं येन गुरुणा तन्नमामो मुहुर्मुहुः ॥ २० ॥
एवं प्रोक्तः स मुनिभिर्मुनिराह पुनश्च तान्।
ब्रह्मशृङ्गं प्रयास्येऽहं यूयं तिष्ठत गच्छत ॥ २१ ॥
कौण्डिन्योऽयं स्थितश्चात्र पृष्टं वः कथयिष्यति।
इत्युक्त्वा स समुत्थाय पीठाद्यातो महामुनिः ॥ २२ ॥
सर्वे प्रणामं साष्टाङ्गं तस्मै चक्रुर्महर्षयः।
तेभ्यः स चाशिषं दत्त्वा गुप्तो यातः परात्मताम् ॥ २३ ॥
कौण्डिन्याय ततः सर्वे पीठं दत्त्वाऽब्रुवन् द्विजाः।
प्रसन्ना ऋषयस्तस्मै उपकाराय ते नृणाम् ॥ २४ ॥

ऋषय ऊचुः—

संहितायाश्च माहात्म्यं पाठस्य च विधिक्रमः।
संहिताया प्रभेदाश्च मुनेरस्य वदाधुना ॥ २५ ॥

कौण्डिन्य उवाच—

आद्योऽसौ ब्रह्मशाण्डिल्यो विद्या यस्यास्ति सामसु।
स च मन्त्रात्मको ज्ञेयोऽभिमानी देवता यथा ॥ २६ ॥
द्वितीयो वेदशाण्डिल्यो वंशाध्याये निरूपितः।
येनाधीता त्रयी विद्या भक्तिविद्या ह्यनुत्तमा ॥ २७ ॥
तृतीयो गार्धभिः प्रोक्तो वीरवैष्णवशासनम्।
येन प्रोक्त तामसानां सर्वेषां मुक्तयेऽपि च ॥ २८ ॥

विष्णोः समाश्रयं कृत्वा त्याज्यमन्याश्रयं ततः।
शिखासूत्रादिभिः किं स्यात्किं स्याद्वर्णाश्रमाश्रमैः ॥ २९ ॥
त्यक्त्वा विधिनिषेधञ्च हरिमेकं दृढाश्रितः।
संसारपारमभ्येति इति तस्यानुशासनम् ॥ ३० ॥
धिक्कृतः स च देवेन पातितो निरये शुचौ।
पुनः समुद्धृतः सद्यो भक्तोऽयमिति विष्णुना ॥ ३१ ॥
स च विप्रकुले जातो हरिभक्तिसमाश्रितः।
इन्द्रद्युम्नं पुनः प्राप्तो वर्णाश्रमपरायणः ॥ ३२ ॥
जगदीशप्रसादान्नं साधु मेने न चाशितुम्।
पुनश्च धिक्कृतस्तत्र माहात्म्यानवबोधतः ॥ ३३ ॥
श्रुत्वैव तस्य माहात्म्यं कृत्वात्यन्तं समादरम्।
प्रसादान्नं वै जग्राह वैदिको वैष्णवोऽभवत् ॥ ३४ ॥
अयं महर्षिः शाण्डिल्य आचार्यः साम्प्रतं किल।
यात्यसौ हरिलीलायां नन्दादीनां गुरुः स्वयम ॥ ३५ ॥
शिष्यः श्रीललितादेव्या व्यासस्य च महात्मनः।
संहिता कथिता तेन सारभूताऽऽगमाम्बुधेः ॥ ३६ ॥
पञ्चरात्रान्तरगता नारदेनापि कीर्त्तिता।
साम्नामृचाञ्च यजुषां सारभूतर्षिणोद्धृता ॥ ३७ ॥
भक्तिधर्मपरा या च सारभूता निरूपिता।
समाधिसहिता या च सात्वता या महामुनेः ॥ ३८ ॥
वेदशास्त्रानुकल्पेन भक्तिधर्मः प्रकीर्त्तितः।
धर्मोऽत्र त्रिविधः प्रोक्तस्तुरीयश्च प्रकीर्णकः ॥ ३९ ॥
अर्थश्चतुर्विधस्तत्र नीतिभेदादनेकधा।
शुक्रस्य च गुरोश्चैव विदुरस्य महामतेः ॥ ४० ॥
नीतिश्च शकुनेश्चापि केवलार्थप्रसाधिका।
अधर्मबहुला चैषा रक्षसां हितकारिणी ॥ ४१ ॥

कामखण्डश्च कथितस्तत्र कामा निरूपिताः।
लौकिका वैदिकाश्चापि ऋषीणां मतभेदतः॥ ४२॥
ज्ञानकाण्डानुसारेण भक्तिकाण्डानुरोधतः।
मोक्षकाण्डश्चतुर्थोऽत्र साङ्ख्याद्यैर्मिश्रितो कृतः॥ ४३॥
सगुणा निर्गुणा चापि भक्तिरत्र प्रकीर्त्तिता।
भक्तिखण्डे प्रकरणैश्च चतुर्भिः सा निरूपिता॥ ४४॥
चतुर्वेदसमा चेयमधिकापि हरेर्मता।
संहिता प्रीतये सद्यः समस्तार्थप्रदर्शिका॥ ४५॥
गङ्गेयं यमुना चेयमियं साक्षात्सरस्वती।
निष्णाता मनुजा ह्यस्यां यान्ति ब्रह्म सनातनम्॥ ४६॥
समादरेण श्रोतव्या पीठस्थस्य गुरोर्मुखात्।
पूजा सम्यक् प्रकर्त्तव्या वैष्णवस्य च वैष्णवैः॥ ४७॥
सिंहासनस्थितेनैव आम्नायानुगतेन च।
वाचनीया संहितेयं श्रोतव्या भक्तितत्परैः॥ ४८॥
ते स्नाताः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षिताः।
तैर्दत्ता धरणी कृत्स्ना संहिता यैः श्रुता नरैः॥ ४९॥
भक्तो भक्तिं समाप्नोति कामी कामान् मनोगतान्।
आप्नोति यस्य गेहेऽपि पुस्तकं पूजितं भवेत्॥ ५०॥
निखिलव्यजनहारी गोत्रधारी मुरारिः।
श्रुतिगणललनानां यो विहारी समूहे।
अवतुमिभवरं यश्चक्रधारी गतो द्राक्।
निजजनहितकारी नक्रवक्त्रप्रहारी॥ ५१॥
जयतु जयतु देवः सच्चिदानन्दमूर्त्तिः।
निगमनिचयगीर्यः (तः) सर्वविश्वात्ममूर्त्तिः॥
निखिलशुभगुणानां सिन्धुरिन्दुप्रपूर्त्तिः।
परिचरणपरैः स्वैर्नित्यदा गीतकीर्त्तिः॥ ५२॥

निगमागमपीयूषसिन्धोरेषा समुद्धृता ।
स्वादुसुधारसंघट्टी पीयतां पीयतां मुहुः ॥ ५३ ॥
दिवौकसां यथा विष्णुः सरितां सागरो यथा ।
नक्षत्राणां यथा चन्द्रः संहितानामियन्तथा ॥ ५४ ॥
महामोहान्धकारस्य वारणायारुणद्युतिः ।
सद्धृदम्बुजमोदाय संहितेयं विराजते ॥ ५५ ॥
महर्षये नमस्तस्मै शाण्डिल्याय दयालवे ।
योऽस्माकं गुरुरस्माकं जगद्गुरुमदर्शयत् ॥ ५६ ॥
श्रुत्वैवं संहितां सर्वे कृत्वा जयजयध्वनिम् ।
शाण्डिल्यं संस्तवन्तश्च मुनयोऽगुर्यथागतम् ॥ ५७ ॥

इति श्रीशाण्डिल्यसंहितायां पञ्चमे भक्तिखण्डे तुरीयांशे संहिता-माहात्म्यनिरूपणं नाम षोडशोऽध्यायः ॥

॥ समाप्तोऽयं हरिभक्तिखंडः ॥



# परिशिष्टं प्रथमम् ।

## श्रीशाण्डिल्यसंहितान्तर्गतक्षेत्रादीनां नामानि ।

इति प्रथमं परिशिष्टम् ।

---

* अस्य शब्दस्यान्यत्र विभिन्नरूपेणोपलब्धेः पार्थक्येनात्र संस्थापनं कृतम् ।

† अत्र निर्दिष्टस्थलतोऽन्यत्राप्युल्लेखोऽस्य कालबोधकान्यस्य चागतः ।

(१) पूजनीयदेवतारूपेणात्र स्थितानां पदार्थानां बहुत्वादत्रोल्लेखो न कृतः ।

# द्वितीयं परिशिष्टम् ।

—*—

## श्रीशाण्डिल्यसंहितान्तर्गतदेवादीनां नामानि ।

इति द्वितीयं परिशिष्टम् ।

---

* अस्यात्रोल्लिखितस्थलतोऽन्यत्राप्यनेकवारं ग्रन्थ उल्लेख उलभ्यते ।

(१) पूजनीयदेवतारूपेण स्थितानां पदार्थानां बहुत्वादत्र परिशिष्ट उल्लेखो न कृतः ।

# परिशिष्टं तृतीयम्

## श्रीशाण्डिल्यसंहितान्तर्गतभक्तिपरम्परादिबोधकम् ।

———*———

( १ )

नारायणः । [ १ ]

ब्रह्मा

वशिष्ठः देवाः

शक्तिः

पराशरः

व्यासः [ पाराशर्यः ] *

ब्रह्मरातः, शाण्डिल्यः, मधुः, [ प्रभञ्जनः ] †

---

(१) प्रथमांशे चतुर्थाध्याये श्लोकाः २३, ३२,४४ ।

* अस्माज्ज्ञानवैराग्यवेदवेदान्तसम्मिता भक्तेः सरणिः प्रवृत्ता ॥ अं०१अ०४,३८ ।

† मधुनाम्ना प्रभञ्जनेन प्रवृत्ततया अस्या मधुविधेति नाम। अस्या भक्तेर्विस्तारस्थलानि कर्णाटक-द्राविड-आन्ध्र सौराष्ट्र-उत्कल-शूरसेन-माथुर-व्यासराज्य-उडुप-कमलावन-हरिस्थान-महानाग-कुलाद्रि-वरसिन्धुकानि । अस्या मुख्याः सिद्धान्ताः विष्णुरेव प्रभुरीश्वरः । ब्रह्माद्या देवताः भक्ताः, जीवाः स्वाभाविकाः दासा इत्यादयः ।

२




---

* उर्ध्वरेतसोऽनेकप्रकारेणैतां व्यस्य माथुरे स्थापितवन्तः । अस्या भक्तेरा-चरणकर्तारो जितेन्द्रियाः कामभोगेभ्यो विरक्ताः गोविन्दचरणदासा वयमिति मन्यमानाः सन्ति । शां० १,४,४९-५२ ।

( ३ )




---

(१) एतत्सम्प्रदायस्थशास्त्रमृग्वेदादितुल्यं साङ्ख्यादिसर्वशास्त्ररहस्यभूतं पाञ्चरात्रसंज्ञकमस्ति । एतत् श्वेतद्वीपे विष्णुनोपदिष्टम् । प्रथमांशे चतुर्थाध्याये ५३-५८ ।

* अस्माद् ग्रन्थादयं मुनिशिष्य इति ज्ञायते, कस्य मुनेरिति तु न ज्ञायते । परन्तु भारतादिसहायेन बृहस्पतिमुनिशिष्य इति निर्णीयते ।




( १ ) प्रथमांशे चतुर्थाध्याये ५६-६१, ७२-७४




इन्द्रप्रमितिः जैगीषव्यः, पराभूतिः, महाभूतिः, नन्दः, विमलः, प्रह्लादः, विवस्वान्

(१) प्रथमांशे चतुर्थाध्याये ६१-७१

* अनया हरितो मन्त्रोपदेशं प्राप्य विरजातटे मन्त्रो जप्तः ।

अस्या भक्तेः प्रचारस्थलानि–द्राविड–पाण्डविषय–कावेरी–सह्यसानु–आहोबल–व्यङ्कट–श्रीरङ्ग–मलयाचल–काञ्ची–कूर्माचल–पद्मनाभ–त्रिविक्रमादीनि (१, ४, ८१–८८)

अस्या भक्तेर्विशेषस्तत्त्वविचारोऽत्रशेषशेषिविभागेनात्मा स्वीकृतः । ज्ञानकर्मसहायेन नारायणात्मिका प्रपत्तिरुपास्यते, सा नवधार्चाप्रकारेण यज्ञदानतपोनिष्ठैर्मुनिभिरुपास्यते । शमादियुक्ता उपासका सर्वदा विष्णुं हृदयाम्भोजेऽभिन्नरूपेण ध्यायन्तोऽन्ते वैकुण्ठपुरवासिनो भवन्ति (१, ४, ८६–९६) ।

( ६ )

कृष्णः, नारायणः, शेषः (१)

शङ्करः *

देवरातः, पराशरिः, ब्रह्मा, शुकः, सनकः

नारदः

व्यासः

ब्रह्मरातः †

(१)प्रथमांशे चतुर्थाध्याये श्लोकः, ६७ तथा प्रथमांशे पञ्चमाध्याये ६-१४-६७ श्लोकाः ।

* अनेन वृन्दावने गोकुलमण्डले व्रजस्त्रीगणसेवित श्रीकृष्णं सामगाना-त्सन्तोष्य भक्तिर्लब्धा ।

† लुप्तप्रायाया अस्यस्या भक्तेः प्रचारस्थलानि—माथुरमण्डल-गोकुल गिरि (गोवर्धन) प्रभृतीनि ।

( ७ )

श्रीकृष्णः ( १ )

ललिता

शाण्डिल्यः

कौण्डिन्यः नन्दादयः गर्गः

(१) प्रथमांशे पञ्चमषष्ठाध्याययोस्तथा चतुर्थांशे षोडशाध्याये च द्रष्टव्यम् ।

* अयं शाण्डिल्योपविष्टे पीठे ऋषिभिः स्थापितः ( शां०अं०४अ०१६ )

समाप्तं तृतीयं परिशिष्टम् ।

——*——

# अथात्र जाताशुद्धस्थलानां संशोधनम् ।

---*---

| अशुद्धम् । | शुद्धम् । | पृष्ठे । | श्लोके । |
|---|---|---|---|
| भवेन | भवे न | २ | १४ |
| अश्रय | आश्रयः | २ | १५ |
| सर्वादौ | सर्गादौ | ३ | २८ |
| स्वेच्छ | स्वेच्छा | ४ | ३५ |
| श्रियः | स्त्रियः | ४ | २ |
| हृंदि | हृंदि | ६ | २५ |
| विष्णो न | विष्णोर्न | ६ | २७ |
| बाधः क | वाधःक | ११ | ४४ |
| कार्य मा | कार्यमा | ११ | ५४ |
| चन्द्रम्ट | चन्दनमृ | १२ | ५६ |
| शाखोक्ता | शाखोक्तां | १२ | ५७ |
| सोशु | सःशु | १२ | ५८ |
| दासेवि | दासैवि | १२ | ५९ |
| मुर्तिनां | मूर्तीनां | १२ | ६० |
| लाध्र्य | लाभ्यं | १२ | ६५ |
| सूक्तैश्च | सूक्तैः | १२ | ६६ |
| यःसुप्र | येषु प्र | १३ | ७६ |
| स्तु भा | स्वभा | १५ | १२ |
| सत्वै | सन्वै | १५ | १२ |
| तानाह | तावाह | १५ | १६ |
| णस्या | ण स्वा | १५ | १६ |
| देवं | देव | १५ | २० |
| भूतभ | भूतं भ | १६ | २४ |
| तौ | ते | १६ | ३२ |
| यातौ | याताः | १६ | ३२ |
| कैयषा | क्यैषां | १६ | ३२ |
| नेनैव | नेनेव | १६ | ३३ |
| योग्य | योग | १६ | ३२ |
| धिप | धिक | १८ | ६२ |
| गीश | गीष | २० | ८५ |
| बह्म | ब्रह्म | २३ | १४ |
| चार्य | चार्यै | २३ | १५ |
| वल्गु | वल्गू | २७ | ३५ |
| च्छुत | च्छु त | २८ | ४७ |
| पि वै | पिवै | २८ | ५० |
| सिषः | शिषा | २९ | ५७ |
| भिग | निर्गु | ३० | ७६ |
| मीष्य | मिष्य | ३१ | १ |
| ग्रद्द | ग्रह | ४१ | १५ |
| कुण्डलं | कुण्डन्तु | ४१ | १६ |
| णा ज्ञप्तः | णाज्ञतः | ४१ | १८ |
| हुत्या | हुत्या | ४२ | २८ |
| इम | इमं | ४२ | ३२ |
| भ्यर्थं | भ्यर्च्य | ४३ | ३६ |
| वे ब्र | वेद्व | ४५ | १७ |
| मदा | महो | ४५ | १६ |
| विधैः | धिपम् | ४६ | ३२ |
| पन्च | पान्च | ४६ | ३५ |

| अशुद्धम् । | शुद्धम् | । पृष्ठे । | श्लोके । |
|---|---|---|---|
| कुन्द य | कुन्दप | ४८ | २२ |
| स्तीर्थ | तीर्थ | ४९ | ३४ |
| चांकु | चां कु | ५३ | १० |
| र्ध्यचि | र्ध्यचि | ५३ | १५ |
| स्वारां | स्वारं | ५४ | २८ |
| गय | गाय | ६६ | १६ |
| दा शुक्रा | दाःशुक्राः | ६६ | २० |
| स्तर्कं | तर्कं | ७२ | ५६ |
| वारा | वरा | ७३ | ७१ |
| द्र्मिं | द्रू र्मिं | ७४ | ८२ |
| तोस्ना | तोऽस्ना | ७५ | ९३ |
| सख्या | सत्ता | ७५ | ९३ |
| एडव | एडाव | ७६ | १०७ |
| ध्यें | द्यँ | ७६ | १११ |
| ध्ये | द्यैं | ७६ | १११ |
| द्यथा | दथ | ७८ | १३३ |
| पूर्व | पूर्वे | ८० | १५८ |
| याश | याशा | ८४ | १६७ |
| र्थात् | थ | ८६ | २२६ |
| द्यवं | द्यैवं | ८६ | २२९ |
| लय | लये | ८६ | २२९ |
| तृतीयभागे | द्वितीयभागे | ११२ | |
| षोडशः | (षोडशः) प्रथमः | ११२ | ,, |
| सप्तदशः | (सप्तदशः) द्वितीयः | ११८ | ,, |
| पर्तिःर्तिः | पर्तिर्नि | ११८ | ४ |
| द्दुप रू | द्दुपूरू | ११८ | ५ |

| अशुद्धम् । | शुद्धम् । | पृष्ठे । | श्लोके । |
|---|---|---|---|
| श्रीद्वि | श्रीर्द्वि | ११९ | १५ |
| कीत्ति | कीर्त्ति | १२३ | २९ |
| द्रपे | द्रूपे | १२७ | ९ |
| दैन्यश्री | दैन्यःश्री | १२९ | २५ |
| ऽदिति | दिति | १३६ | ७६ |
| सदुर्ल | सुदुर्ल | १४३ | २ |
| जितै | जिते | १४३ | ४ |
| सान्वि | सात्वि | १४३ | ४ |
| वताः | वता | १४३ | ९ |
| षा वै | षाऽवै | १४४ | १० |
| क्तियु | क्त्ययु | १४४ | १२ |
| न्तिर्वि | न्ति वि | १४४ | १४ |
| श्रुमे | शुभे | १४४ | १८ |
| पन्नेना | पन्नोना | १४४ | २० |
| दित्ता | दीत्ता | १४६ | ४२ |
| व्येति | व्येति(?) | १४७ | ८ |
| ष्णोवे | ष्णोर्वै | १४७ | १० |
| ष्णो जा | ष्णोर्जा | १४८ | २२ |
| उर्द्ध | उर्ध्व | १४८ | २६ |
| ख्योच्छि | खोच्छि | १५२ | ७ |
| त्वश्रु | श्मश्रौ | १५५ | ४३ |
| दभ्र | ददृभ्ट | १६१ | २७ |
| राम्म | रासम | १६२ | ३७ |
| चाद्य | चाद्यं | १६४ | ६२ |
| क्रीडय | क्रीडा | १६४ | ६७ |
| काष्ट | काष्ठ | १६६ | ८६ |
| पादुके | पादुके | १६६ | ९३ |
| वत्तत: | वत्तस: | १६७ | १०२ |
| कल्पा | अल्पा | १६८ | ३ |
| र्यथा | यथा | १८१ | ३९ |

| अशुद्धम्। | शुद्धम्। | पृष्ठे। | श्लोके। |
|---|---|---|---|
| विश | विंश | १९९ | ९ |
| द्विधा | द्विधाऽऽस | १८८ | ६ |
| तद्वृत्ते | तद्वृष्ये | १९५ | १ |
| विशति | विंशति | १९९ | ९ |
| पातु | पापानु | २०० | ३० |
| द्रमा | द्रु मा | २०२ | ६१ |
| भित्त | भित्तु | २०२ | ६३ |
| त्यागो | त्यागे | २०५ | ९५ |
| गुरुम् | गुरुः | २०७ | १२ |
| माल्लाप | मालाः प | २०७ | १३ |
| धर्मंज्ञा | धर्माज्ञा | २०८ | २७ |
| दीय | हीय | २१० | ६१ |
| तैति | तैत्ति | २१५ | ३ |
| माप्ना | माप्नो | २१९ | २१ |
| विन्द | निन्द | २२९ | ९ |
| हरि | हरिं | २३३ | ५९ |
| कीत्ति | कीर्त्ति | २३९ | ३८ |
| रिणाम् | रिणः | २४० | ५० |
| र्यादि | र्यामि | २४१ | ११ |
| जयना | जय ना | २४५ | १२ |
| सत्यधा | सप्तधा | २५० | २१ |
| पीठे | पोठं | २५५ | १२ |
| लोम्येन | लोम्ये न | २५७ | ४५ |
| पूज्ये | पूज्यं | २६२ | ८ |
| न्योध्द | न्योऽध्द | २६४ | १ |
| सामा | समा | २६५ | ९ |
| गात्री | गायत्री | २६९ | ८ |
| द्वयोरू | द्वयो रू | २७१ | १ |
| ध्दैश्या | हेया | २७२ | १५ |
| इतोऽङ्का नवाधिका आध्यायपरिसमाप्ति ज्ञेयाः | | | २८३-३३ |
| मननी | माननी | २८६ | ६५ |
| कुम्भै | कुम्भैः | २८९ | २५ |
| म परो | मपरो | २९१ | ५१ |
| व्वव | व्यव | २९३ | २१ |
| शिएयैः | शिष्यैः | ३०३ | ६७ |
| शीं भक्ति ना | शी भक्तिर्ना | ३०८ | १० |
| श्रमाश्र | श्रमश्च | ३१० | २९ |
| ये शुचैा | येऽशुचैा | ३१० | ३१ |
| कीर्ति | कीर्त्ति | ३१० | ३७ |
| रणैश्च च | रणैश्च | ३१३ | ५२ |
| प्रथमपरिशिष्टे — दीपम् | द्वीपम् | | |
| द्वितीयपरिशिष्टे—विष्कक् | विष्वक् | | |
| ,, ,, जैगिशव्यः | जैगीषव्यः | | |
| ,, गाधर्भिः शब्दो द्रष्टव्यः | | | |

समाप्तं संशोधनम् ।



